ओयणवंजणपाणगआयामुसिणोदगं च कुम्मासा । डगलगसरक्खसूई पिप्पलमाई उ उवओगो ॥ ३७ ॥

व्याख्या—ओदनः-शाल्यादि भक्तं व्यञ्जनं-पत्रशाकतीमनादि पानकं-काञ्जिकं, तत्र ह्यवश्रावणं प्रक्षिप्यते, ततस्तदपेक्षया काञ्जिकस्याग्निकायता आयामम्-अवश्रावणम् उष्णोदकम्-उद्वृत्तात्रिदण्डम्, एतेषां च पदानां समाहारद्वन्द्वः, चकारो मण्डकादिसमुच्चयार्थः, 'कुल्मापाः' पक्वा मापाः, एते चौदनादयोऽग्निनिष्पन्नत्वेनाग्निकार्यत्वादग्नयो व्यपदिश्यन्ते, भवति च तत्कार्यत्वात्तच्छब्देन व्यपदेशो यथा द्रम्मो भक्षितोऽनेनेत्यादौ, ओदनादयश्चाचित्तास्तत एतेषामचित्ताग्निकायत्वेनाभिधानं न विरुध्यते, तथा 'डगलकाः' पक्वेष्टकानां खण्डानि 'सरजस्कः' भस्म 'सूची' लोहमयी वस्त्रसीवनिका, अथवा सरक्खसूइत्ति रक्षा-भस्म सह रक्षया वर्त्तते इति सरक्षा सूची, किमुक्तं भवति?-रक्षा सूची चेति, 'पिप्पलकः' किञ्चिद्वक्रः क्षुरविशेषः, आदिशब्दान्नखरदनिकादिपरिग्रहः, एतानि च डगलकादीनि पूर्वमग्निरूपतया परिणतान्यासीरन्, ततो भूतपूर्वगत्या सम्प्रत्यप्यग्निकायत्वेन व्यपदिश्यन्तेऽचित्तानि च, न चैतेषामचित्ताग्निकायत्वाभिधाने विरोधः ॥ सम्प्रत्यचित्ताग्निकायस्य प्रयोजनमाह—'उवओगो' एतेषामोदनादीनां य उपयोगो-भोजनादावुपयुज्यमानता तदचित्ताग्निकायेन साधनां प्रयोजनं, द्रव्यादिभेदाच्च चतुर्विधत्वमचित्ताग्निकायस्य प्रागिव यथायोगं भावनीयम् ॥ उक्तस्तेजस्कायपिण्डः, सम्प्रति वायुकायपिण्डमाह—

वाउक्काओ तिविहो सच्चित्तो मीसओ य अच्चित्तो । सच्चित्तो पुण दुविहो निच्छयववहारओ चेव ॥ ३८ ॥

व्याख्या—वायुकायस्त्रिविधः, तद्यथा—सचित्तो मिश्रोऽचित्तश्च, सचित्तः पुनर्द्विधा-निश्चयतो व्यवहारतश्च ॥ एतदेव निश्चयव्यवहाराभ्यां सचित्तस्य द्वैविध्यमचित्तं चाह—

मा ताव झंख पुत्तय! परिवाडीए इहेहि सो साहू । एयस्स उट्ठिया ते दाहं सोउं विवज्जेइ ॥ २८६ ॥

अहवा—अंगुलियाए घेत्तुं कड्ढइ कप्पट्ठओ घरं जत्तो । किंति कहिए न गच्छइ पाहुडिया एस सुहुमा उ ॥ २८७ ॥

व्याख्या—इह काचिद्गृहस्था भोजनं याचमानं पुत्रं प्रतिपादयति—हे पुत्रक! मा तावज्झष—वारं वारं जल्प, इह परिपाट्या साधुरागमिष्यति ततस्तस्यार्थमुत्थिता सती 'ते' तुभ्यं दास्यामि, अत्रान्तरे च साधुरागत इदं वचः श्रुत्वा विवर्जयति, मा भूदुत्सर्प्पणरूपसूक्ष्मप्राभृतिकादोषः, अत्रार्वाग् विवक्षितस्य भोजनदानस्य साधुभिक्षादानेन समं परतः करणमुत्सर्प्पणम्, अथवा प्राक्तने जनन्योक्ते बालकेन श्रुते सति स 'कप्पट्ठओ' बालकस्तं साधुमङ्गुल्या गृहीत्वा यतो निजगृहं ततः समाकर्षति, ततः साधुस्तं बालकं पृच्छति—यथा किं मामाकर्षसि?, ततः स यथावस्थितं कथयति, बालकत्वेन ऋजुत्वात्, ततः कथिते तत्र न गच्छति, मा भूदुत्सर्प्पणरूपसूक्ष्मप्राभृतिकादोषसम्पर्कः, एषा सर्वाऽप्यनन्तरोक्ता सूक्ष्मप्राभृतिका । सम्प्रति 'कव्वट्ठीए समोसरणे' इत्यवयवं व्याचिख्यासुः प्रथमतोऽवष्वष्कणरूपां बादरप्राभृतिकामाह—

पुत्तस्स विवाहदिणं ओसरणे अइच्छिए मुणिय सड्ढी । ओसक्कंतोसरणे संखडिपाहेणगदवट्ठा ॥ २८८ ॥

व्याख्या—पुत्रस्य, उपलक्षणमेतत् पुत्रिकादेश्च, विवाहदिनं ज्योतिर्विदा 'अवसरणे' साधुसमुदाये यथाविहारक्रममतिक्रान्तेऽन्यत्र गते सत्युपदिश्यमानं श्रुत्वा श्राद्धी विवाहमवष्वष्कते, अर्वाग्दिनं दृष्ट्वा विवाहं करोति, किमर्थम्?, इत्याह—'समवसरणे' षष्ठीसप्तम्योरर्थं प्रत्यभेदात्समवसरणस्य—साधुसमुदायस्य विवाहरूपायां सङ्खड्यां प्रहेणकं—मोदकादि द्रवं—तण्डुलधावनादि तदर्थं—तद्दानार्थं, भावना च प्रथमगाथायामेव कृता ॥ उत्सर्प्पणरूपां बादरप्राभृतिकामाह—

कुड्डस्स कुणइ छिड्डं दारं वड्ढेइ कुणइ अन्नं वा । अवणेइ छायणं वा ठावइ रयणं व दिप्पंतं ॥ ३०३ ॥
जोइ पइवे कुणइ व तहेव कहणं तु पुट्ठ दुट्ठे वा । अत्तट्ठिए उ गहणं जोइ पइवे उ वज्जित्ता ॥ ३०४ ॥

व्याख्या—प्रकाशकरणार्थं कुड्यस्य छिद्रं करोति, यद्वा द्वारं लघु सद् 'वर्द्धयति' बृहत्तरं करोति, यदिवाऽन्यद्द्वितीयं द्वारं करोति, अथवा गृहस्योपरितनं छादनं स्फेटयति, यदिवा दीप्यमानं रत्नं स्थापयति, यद्वा—ज्योतिः प्रदीपं वा करोति, तथैवानन्तरोक्तेन प्रकारेण स्वयमेव यदिवा पृष्टे सति प्रादुष्करणे कथिते यद्भक्तादि प्रादुष्करणदोषदुष्टं तत् साधूनां न कल्पते। यदि पुनः प्राक्तनेन प्रकारेणात्मार्थीकरोति तदा ग्रहणं कल्पते इति भावः। ज्योतिःप्रदीपाभ्यां प्रकाशमात्मार्थीकृतमपि न कल्पते, तेजस्कायसंस्पर्शात् । सम्प्रति 'अपरिभुत्तं कप्पइ कप्पं अकाऊणं' इति व्याचिख्यासुराह—

पागडपयासकरणे कयंमि सहसा व अहवऽणाभोगा । गहियं विगिंचिऊणं गेण्हइ अन्नं अकयकप्पे ॥ ३०५ ॥

व्याख्या—प्रकटकरणे प्रकाशकरणे वा कृते सति यत् सहसाऽनाभोगतो वा गृहीतं तद् 'विगिंचिऊणं' परिष्ठाप्य तस्मिन् पात्रे उज्झिते लेशमात्रखरण्टितेऽपि 'अकृतकल्पे' जलप्रक्षालनरूपकल्पदानाभावेऽप्यन्यत् शुद्धं गृह्णाति, नास्ति कश्चिद्दोषो, विशोधिकोटित्वात् ॥ उक्तं प्रादुष्करणद्वारम्, अथ क्रीतद्वारमाह—

कीयगडंपि य दुविहं दव्वे भावे य दुविहमेक्केक्कं । आयकियं च परकियं परदव्वं तिविह चित्ताई ॥ ३०६ ॥

व्याख्या—क्रयणं क्रीतं तेन कृतं—निष्पादितं क्रीतकृतं, क्रीतमित्यर्थः, तदपि आस्तां प्रादुष्करणमित्यपिशब्दार्थः, 'द्विविधं' द्विप-

हत्थसयमेग गंता दइओ अच्चित्तु बीयए मीसो । तइयंमि उ सच्चित्तो वत्थी पुण पोरिसिदिणेसु ॥४१ ॥

व्याख्या—इहोर्द्धमपाटितेनापनीतमस्तकेन निकर्षितचर्म्मान्तर्वर्त्तिसर्वास्थ्यादिकचवरेणापरचर्म्ममयस्थिगलकस्थगितापानच्छिद्रेण सङ्कीर्णमुखीकृतग्रीवान्तर्विवरेणाजापश्वोरन्यतरस्य शरीरेण निष्पन्नश्चर्ममयः प्रसेवकः कोत्थलकापरपर्यायो दृतिः, स चाचित्तमुखवातभृतः सन् दवरकेण गाढबद्धमुखो नद्यादिजले प्लाव्यमानः क्षेत्रतो हस्तशतमेकं यावद्गन्ता तावत्सः 'दृतिः' दृतिस्थो वातकायोऽचित्तः, प्रथमे च हस्तशतेऽतिक्रान्ते सति द्वितीये प्रविशन् मिश्रो भवति, स च मिश्रस्तावद्भवति यावद् द्वितीयहस्तशतपर्यन्तः, ततो द्वितीये हस्तशतेऽतिक्रान्ते तृतीये प्रविशन् सचित्तो भवति, तत ऊर्द्धं सचित्त एव, अथवैकस्मिन्नेव हस्तशते गमनेन आगमनेन पुनर्गमनेन च क्रमेणाचित्तत्वादिक्रमवगन्तव्यं, यदिवा—हस्तशतगमनकालं परिभाव्यैकस्मिन्नपि स्थाने जलमध्यस्थितस्योक्तक्रमेणाचित्तत्वादिकं परिभावनीयं, दृतिग्रहणं चोपलक्षणं तेन वस्तावप्येवं द्रष्टव्यं, वस्तिश्च दृतिवत्स्वरूपतो भावनीयः, नवरमपरचर्म्ममयस्थिगलकस्थगितग्रीवान्तर्विवरोऽतिविवृतमुखीकृतपाश्चात्यप्रदेशः स विज्ञेयः, तथा 'वत्थी पुण पोरसिदिणेसु'त्ति स्थले स्निग्धं रुक्षं च कालमाश्रित्य 'वस्तिः' वास्तिस्थो वातः, उपलक्षणमेतत्, तेन दृतिस्थोऽपि वातः स्थलस्थः स्निग्धं रूक्षं च कालमधिकृत्य यथाक्रमं पौरुषीषु दिनेषु चाचित्तादिरुपो वेदितव्यः ॥ एनमेव गाथाऽवयवं भाष्यकृद् गाथाचतुष्टयेन व्याख्यानयति—

निद्धेयरो य कालो एगंतसिणिद्धमज्झिमजहन्नो । लुक्खोवि होइ तिविहो जहन्न मज्झो य उक्कोसो ॥१२॥

एगंतसिणिद्धंमी पोरिसिमेगं अचेअणो होइ । बिइयाए संमीसो तइयाइ सचेयणो वत्थी ॥ १३ ॥

व्याख्या—धर्मकथादिषु भावक्रीतं भवति, इयमत्र भावना—यत् परचित्तावर्जनार्थं धर्मकथां वादं 'क्षपणं' षष्ठाष्टमादिरूपं तपो निमित्तमातापनां वा करोति, यद्वा—श्रुतस्थानमाचार्योऽहमित्यादिकं कथयति, यदिवा जातिं कुलं गणं शिल्पं कर्म वा परेभ्यः प्रकटयति, इत्थं च परमावर्ज्य यत्ततो भक्तादि गृह्णाति तदात्मभावक्रीतं, यदा तु दुःखक्षयार्थं कर्मक्षयार्थं च धर्मकथादिकं यथायोगं करोति तदा स प्रवचनप्रभावकतया महानिर्जराभाग् भवति, उक्तं च—"पावयणी धम्मकही वाई नेमित्तिओ तवस्सी य । विज्जा सिद्धो य कई अट्ठेव पभावगा भणिया ॥ १ ॥" सम्प्रति धर्मकथारूपं प्रथमं द्वारं प्रपञ्चयितुमाह—

धम्मकहाअक्खित्ते धम्मकहाउट्ठियाण वा गिण्हे । कड्डुंति साहवो चिय तुमं व कहि पुच्छिए तुसिणी ॥ ३१२ ॥

व्याख्या—आहाराद्यर्थं धर्मकथां कथयता यदा ते श्रोतारो धर्मकथया सम्यगाक्षिप्ता भवन्ति तदा तेषां पार्श्वे याचते, ते हि तदा प्रहर्षमागताः सन्तोऽभ्यर्थिता न तिष्ठन्ति, यद्वा—धर्मकथात उत्थितानां सतां तेषां पार्श्वे यद्गृह्णाति तदात्मभावक्रीतम्, आत्मना—स्वयमेव भावेन—धर्मकथनरूपेण क्रीतमात्मभावकृतमिति, यद्वा—धर्मकथाकथकः कोऽपि प्रसिद्धो वर्त्तते, तदनुरूपाकारश्च विवक्षितः साधुः,ततस्तं श्रावकाः पृच्छन्ति—यः 'कथी' धर्मकथाकथकःश्रूयते, स किं त्वम् ? इति, ततः स भक्तादिलोभादेवं वक्ति—यथा साधव एव प्रायो धर्मकथां कथयन्ति, नान्यः, यदिवा तूष्णीं—मौनेनावतिष्ठते, ततस्ते श्रावका जानन्ते—यथा स एवायं, केवलं गम्भीरत्वादात्मानं न साक्षाद्वचसा प्रकाशयतीति, ततः प्रभूततरं तस्मै प्रयच्छन्ति, तच्च तेभ्यः प्रभूततरं लभ्यमानमात्मभावकृतम्, आत्मना—स्वयमेव भावेन—स्वयमसोऽपि कथकः सोऽहं कथक इति ज्ञापनलक्षणेन क्रीतमितिकृत्वा । अथवा—

---

१ प्रवचनी धमकथी वादी नैमित्तिक. तपस्वी च । विद्यावान् सिद्धश्च कविरष्टावेव प्रभावका भणिता. ॥ १ ॥

परियट्टियंपि दुविहं लोइय लोगुत्तरं समासेणं । एकेकंपि अ दुविहं तद्दव्वे अन्नदव्वे य ॥ ३२३ ॥

व्याख्या—' परिवर्त्तितमपि ' उक्तशब्दार्थं ' समासेन ' सङ्क्षेपेण द्विविधं, तद्यथा—लौकिकं लोकोत्तरं च, एकैकमपि द्विविधं, तद्यथा—' तद्द्रव्ये ' तद्द्रव्यविषयम् ' अन्यद्रव्ये ' अन्यद्रव्यविषयं च, तत्र तद्द्रव्यविषयं यथा कुथितं घृतं दत्त्वा साधुनिमित्तं सुगन्धि घृतं गृह्णातीत्यादि, अन्यद्रव्यविषयं यथा कोद्रवकूरं रामर्पयित्वा साधुनिमित्तं शाल्योदनं गृह्णातीत्यादि, इदं च लौकिकम्, एवं लोकोत्तरमपि भावनीयं । सम्प्रति लौकिकस्योदाहरणं गाथात्रयेणाह—

अवरोप्परसज्झिलगा संजुत्ता दोवि अन्नमन्नेणं । पोग्गलिय संजयट्ठा परियट्टण संखडे बोही ॥ ३२४ ॥

अणुकंप भगिणिगेहे दरिद्द परियट्टणा य कूरस्स । पुच्छा कोद्दवकूरे मच्छर णाइक्खं पंतावे ॥ ३२५ ॥

इयरोऽविय पंतावे निसि ओसवियाण तेसि दिक्खा य । तम्हा उ न घेत्तव्वं कइ वा जे ओसमेहिंति ॥ ३२६ ॥

व्याख्या—वसन्तपुरे नगरे निलयो नाम श्रेष्ठी, तस्य सुदर्शना नाम भार्या, तस्या द्वौ पुत्रौ, तद्यथा—क्षेमङ्करो देवदत्तश्च, लक्ष्मीनामा च दुहिता, तत्रैव वसन्तपुरे तिलको नाम श्रेष्ठी, सुन्दरी नाम तस्य महेला, तस्या धनदत्तः पुत्रो बन्धुमती दुहिता, तत्र क्षेमङ्करः समितसूरीणामुपकण्ठे दीक्षां गृहीतवान्, देवदत्तेन च बन्धुमती धनदत्तेन च लक्ष्मीः परिणीता, अन्यदा च कर्मवशतो धनदत्तस्य दारिद्र्यमुपतस्थे, ततः स प्रायः कोद्रवकूरं भुङ्क्ते, देवदत्तश्चेश्वरः, ततः स सर्वदैव शाल्योदनं भुङ्क्ते, अन्यदा च स क्षेमङ्करः साधुर्यथाविहारक्रमं तत्राजगाम, स च चिन्तयामास—यदि देवदत्तस्य भ्रातुर्गृहे गमिष्यामि ततो मे भगिनी दारिद्र्येणाहमभिभूता ततो

गृह्यते, अथवा 'ग्लानत्वे' मन्दत्वे सति वायुना प्रयोजनं भवति, क्वापि हि रोगे दत्यादिना संगृह्य वातोऽपानादौ प्रक्षिप्यते, अनेन स्थलस्थो गृहीतः, सचित्तमिश्रौ तु यत्नतः परिहरेत्, जलमध्ये त्वशक्ये परिहारे प्रायश्चित्तं पश्चादभिगृह्णीयात् ॥ तदेवमुक्तो वायुकायपिण्डः- सम्प्रति वनस्पतिकायपिण्डमाह—

वणस्सइकाओ तिविहो सच्चित्तो मीसओ य अच्चित्तो । सच्चित्तो पुण दुविहो निच्छयववहारओ चेव ॥४३॥

व्याख्या—वनस्पतिकायस्त्रिविधः, तद्यथा—सचित्तो मिश्रोऽचित्तश्च, सचित्तः पुनर्द्विधा, तद्यथा–निश्चयतो व्यवहारतश्च ॥ इदमेव निश्चयव्यवहाराभ्यां सचित्तस्य द्वैविध्यं मिश्रं च प्रतिपादयति—

सव्वोऽवऽणंतकाओ सच्चित्तो होइ निच्छयनयस्स । ववहारस्स य सेसो मीसो पव्वायरोट्टाई ॥ ४४ ॥

व्याख्या—निश्चयनयस्य मतेन सर्वोऽपि 'अनन्तकायः' वनस्पतिकायः सचित्तो भवति, शेषः पुनः 'प्रत्येकः' निम्बाम्रादिकः 'व्यवहारस्य' व्यवहारनयस्य मतेन सचित्तः, मिश्रो म्लानलोट्टादिः, तत्र प्रम्लानः सर्वोऽपि वनस्पतिकायोऽर्द्धशुष्को ज्ञेयः, तत्र हि–योऽशंः शुष्कः सोऽचित्तः शेषस्तु सचित्त इति मिश्रः, 'लोट्टः' घरट्टादिचूर्णः, तत्र काश्चिन्नखिकाः सम्भवन्ति ताश्च सचित्ताः शेषस्त्वचित्त इति मिश्रः, आदिशब्दात्तत्कालदलितकणिक्कादिपरिग्रहः, तत्रापि कियन्तोऽवयवा अद्याप्यपरिणता इति सचित्ताः कियन्तस्त्वचित्ता इति मिश्रता ॥ साम्प्रतमचित्तं वनस्पतिकायमाह—

पुप्फाणं पत्ताणं सरडुफलाणं तहेव हरियाणं । वंटंमि मिलाणंमी नायव्वं जीवविप्पजढं ॥ ४५ ॥

एव गाथाया विवरणभूतमुत्तरं गाथाद्वयं, तदपि च सुगमं, नवरं 'मच्छर'त्ति विभक्तिलोपात् मत्सरेण 'नाइक्ख'त्ति परिवर्त्तनेऽकथिते 'पंतावे' अताडयत्, 'उवसमियाण'त्ति उपशमितानां, ननु परिवर्त्तनमपीदं प्रव्रज्यायाः कारणं बभूव ततो विशेषतः साधुभिरिदमाचरणीयमत आह—'कइ व'त्ति कति वा कियन्तो वा क्षेमङ्करसाधुसदृशा भविष्यन्ति ये इत्थं परिवर्त्तनसमुत्थं कलहमपनीय प्रव्रज्यां ग्राहयिष्यन्ति, तस्मान्नैवेदमाचरणीयम् । उक्तं लौकिकं परिवर्त्तनम्, अथ लोकोत्तरं तद्वक्तव्यं, तत्र यत् साधुः साधुना सह वस्त्रादिपरिवर्त्तनं करोति तल्लोकोत्तरं परिवर्त्तनं, तत्र दोषानुपदर्शयति—

ऊणहिय दुब्बलं वा खर गुरु छिन्न मइलं असीयसहं । दुव्वन्नं वा नाउं विपरिणमे अन्नभणिओ वा ॥ ३२७ ॥

व्याख्या—वस्त्रपरिवर्त्तने कृते सतीदं न्यूनं यत्तु मदीयं वस्त्रं बभूव तन्मानयुक्तं—प्रमाणोपपन्नं, यद्वा इदमधिकं मदीयं पुनर्मानयुक्तमेवं सर्वत्र भावना, नवरं 'दुर्बलं' जीर्णप्रायं 'खरं' कर्कशस्पर्शं 'गुरुः' स्थूलसूत्रनिष्पन्नतया भारयुक्तं 'छिन्नं' निपुण्पकं 'मलिनं' मलाविलम् 'अशीतसहं' शीतरक्षणाक्षमं' 'दुर्वर्णं' विरूपच्छायम्, इत्थंभूतं स्वयमेव ज्ञात्वा 'विपरिणमेत्' घृष्टोऽहमिति विचिन्तयेत्, यद्वा—अन्येन साधुना खग्गूडेन भणित उत्प्रासितो विपरिणमेत् । अत्रैवापवादमाह—

एगस्स माणजुत्तं न उ बिइए एवमाइ कज्जेसु । गुरुपामूले ठवणं सो दलयइ अन्नहा कलहो ॥ ३२८ ॥

व्याख्या—एकस्य साधोर्यस्य सत्कं तन्न भवति तस्य 'मानयुक्तं' प्रमाणोपपन्नं वस्त्रादि, न द्वितीये—द्वितीयस्य साधोर्यस्य सत्कं तस्य मानयुक्तं, किन्तु ?—न्यूनमधिकं वा, तत एवमादिषु कार्येषु समुत्पन्नेषु परिवर्त्तनस्य सम्भवो भवति, तत्र परिवर्त्तनस्य सम्भवे

व्याख्या—पुष्पाणां प्राणा 'शलादुफलानां' कोमलफलानां, तथा 'हरितानां' व्रीहिकादीनां 'वृन्ते' प्रसवबन्धने 'म्लाने' शुष्कप्राये ज्ञातव्यं स्वरूपं जीवविप्रमुक्तम् ॥ सम्प्रत्यचित्तवनस्पतिकायस्य प्रयोजनमाह—

संथारपायदंडगखोमिय कप्पा य पीढफलगाई । ओसहभेसज्जाणि य एमाइ पओयणं बहुहा ॥ ४६ ॥

व्याख्या—येऽमी 'संस्तारकादयः' शय्यापट्टादयः यतिभिरभिसङ्गृह्यन्ते, यानि च पात्राणि ये च 'दण्डकाः' दण्डविदण्डादयः, गौ च क्षौमौ कल्पौ यच्च पीठफलकादिकम्, अत्रादिशब्दात्कपलिकादिपरिग्रहः, यानि औषधानि भेषजानि चेत्येवमादिकं 'बहुधा' बहुप्रकारं प्रयोजनमचित्तवनस्पतिकायस्य, इह 'औषधानि' केवलहरीतक्यादीनि 'भेषजानि' तु तेषामेव द्व्यादीनामेकत्र मीलित्वा चूर्णानि, यद्वाऽन्तरुपयोगीन्यौषधानि बहिरुपयोगीनि प्रलेपादीनि भेषजानि ॥ उक्तो वनस्पतिकायपिण्डः, साम्प्रतं द्वीन्द्रियादिपिण्डचतुष्टयं प्रतिपिपादयिषुस्तत्प्रयोजनं चोपचिक्षिप्सुरिदमाह—

बियतियचउरो पंचिंदिया य तिप्पभिइ जत्थ उ समेंति । सट्ठाणे सट्ठाणे सो पिंडो तेण कज्जमिणं ॥ ४७ ॥

व्याख्या—यत्र मेलके स्वस्थाने स्वस्थाने स्वेषाम्—आत्मीयानां स्थानम्—अवस्थानं यत्र तत्र, सजातीयवर्गरूपे इत्यर्थः, द्वित्रिचतुष्पञ्चेन्द्रियास्त्रिप्रभृतयः संयन्ति—एकत्र संश्लिष्टा भवन्ति, तद्यथा—त्रयः त्रयः चत्वारः चत्वार इत्यादि, त्रिप्रभृतिग्रहणं चोपलक्षणं, तेन द्वौ द्वावपि यत्र संश्लिष्यतः स पिण्डः, स्वस्थाने स्वस्थाने इति भूयोऽपि सम्बध्यते, ततोऽयमर्थः—तेषां द्वीन्द्रियादीनां स्वजातौ स्वजातौ स पिण्डो वेदि-

१ दडो बाहुपमाणो विदंडओ कक्खमित्तो उ ( दण्डो बाहुप्रमाणो विदण्डकः कक्षामात्रस्तु )

ताऽऽसीत्, ततो न साधवे भिक्षा दत्ता इति, एतैः कारणैः काचित् श्राद्धिका स्वगृहादृहीत्वा साधोरुपाश्रयमानयेत्, तच्चानयनस्य कारणं तदा शून्यं गृहमासीदित्यादिरूपं 'दीपयति' प्रकाशयति, तत एवं नोनिशीथस्वग्रामाभ्याहृतसम्भवः । तदेवमुक्तं स्वग्रामपरग्रामभेदभिन्नं नोनिशीथाभ्याहृतम्, अथ स्वग्रामपरग्रामभेदभिन्नमेव निशीथाभ्याहृतमतिदेशेनाह—

एमेव कमो नियमा निसीहऽभिहडेऽवि होइ नायव्वो । अविइअदायगभावं निसीहिअं तं तु नायव्वं ॥ ३३६ ॥

व्याख्या—य एव क्रमः स्वग्रामपरग्रामादिको नोनिशीथाभ्याहृत उक्तः स एव निशीथाभ्याहृतेऽपि नियमात् ज्ञातव्यः । सम्प्रति निशीथाभ्याहृतस्वरूपं कथयति–'अविइय' इत्यादि, अविदितो–यतिना न विज्ञातो दायकस्याभ्याहृतदानपरिणामो यत्र तदविदितदायकभावं निशीथाभ्याहृतमवगन्तव्यं, किमुक्तं भवति ?–सर्वथा साधुनाऽभ्याहृतत्वेन यदपरिज्ञातं तन्निशीथाभ्याहृतमिति ॥ परग्रामाभ्याहृतस्य निशीथस्य सम्भवं गाथाचतुष्टयेनाह—

अइदूरजलंतरिया कम्मासंकाएँ मा न घेच्छंति । आणंति संखडीओ सड्ढो सड्ढी व पच्छन्नं ॥ ३३७ ॥

निग्गम देउल दाणं दियाइ सन्नाइ निग्गए दाणं । सिट्ठंमि सेसगमणं दिंतऽन्ने वारयंतऽन्ने ॥ ३३८ ॥

भुंजण अजीरपुरिमड्ढगाइ अच्छंति भुत्तसेसं वा । आगमनिसीहिगाई न भुंजई सावगासंका ॥ ३३९ ॥

उक्खित्तं निक्खिप्पइ आसगयं मल्लगंमि पासगए । खामित्तु गया सड्ढा तेऽवि य मु(सु)द्धा असढभावा ॥३४०॥

व्याख्या—कचिद्ग्रामे धनावहप्रमुखा बहवः श्रावकाः धनवतीप्रभृतयश्च श्राविकाः, एते च सर्वेऽप्येककुटुम्बवर्त्तिनः । अन्यदा

तव्यः, सोऽपि च त्रिधा, तद्यथा—सचित्तो मिश्रोऽचित्तश्च, तत्र सचित्तस्त्रिप्रभृतीनां अक्षादीनां जीवतामेकत्र संश्लेषेण मिलनं, मिश्रस्तेषामेव केषाञ्चिज्जीवतां केषाञ्चिन्मृतानामेकत्र संश्लेषः, अचित्तो जीवविप्रमुक्तानां तेषामेवाक्षादीनामेकत्र मिलनं, तेन च पिण्डेन अत्र जातावेकवचनं 'तैः' द्वीन्द्रियादिपिण्डैः 'कार्यं' प्रयोजनम् 'इदं' वक्ष्यमाणम् ॥ तत्र द्वित्रिचतुष्पिण्डप्रयोजनं सार्द्धगाथयाऽभिधित्सुराह—

बेइंदियपरिभोगो अक्खाण ससिप्पसंखमाईणं । तेइंदियाण उद्देहिगादि जं वा वए वेज्जो ॥ ४८ ॥
चउरिंदियाण मच्छियपरिहारो आसमच्छिया चेव ॥

व्याख्या—इह साधोर्द्वीन्द्रियादीनां यथासम्भवं प्रयोजनं द्विधा, तद्यथा—शब्देन शरीरेण च, तत्र शब्देन प्रयोजनं शकुनादिपरिभावने, तथाहि—शङ्खशब्दमाकर्ण्यमानं प्रशस्तं महाशकुनमामनन्ति शाकुनिकाः, शरीरेण प्रयोजनं त्रिधा, तद्यथा—सम्पूर्णेन शरीरेण तदेकदेशेन शरीरसम्पर्कसमुद्भूतेन चान्येन वस्तुना, तत्रामीषां चतुर्णामपि प्रयोजनानां मध्ये किमपि केषाञ्चित्साधूनामुपयोगवद्भवति, केषाञ्चित्तु चत्वार्यपि, तत्र द्वीन्द्रियाणां सम्पूर्णशरीरेण प्रयोजनं साक्षादभिधत्ते—द्वीन्द्रियाणां 'परिभोगः' उपयोगोऽक्षाणां 'सशुक्तिशङ्खादीनां' शुक्तिशङ्खादिसहितानां, तत्र 'अक्षाः' चन्दनकाः 'शुक्तयः' सुप्रतीताः यत्र स्वातिनक्षत्रसम्भविजलसम्पर्कतो मौक्तिकानि जायन्ते, 'शङ्खाः' शम्बूकाः, आदिशब्दात्कपर्दादिपरिग्रहः, तत्राक्षाणां कपर्दकादीनां चोपयोगः समवसरणस्थापनादौ शङ्खशुक्तिकानां चक्षुःपुष्पकाद्यपनोदादौ, त्रीन्द्रियाणां परिभोगमाह—त्रीन्द्रियाणां परिभोग उद्देहिकादि, इह उद्देहिकाशब्देन उद्देहिकाकृतवल्मीकमृत्तिका परिगृह्यते, आदिशब्दादन्यस्याप्येवंविधस्य त्रीन्द्रियमृत्तिकादेः परिग्रहः, स परिभोगः परिभोगविषयत्वात्, यद्वाऽत्र कर्मसाधनः परि-

एतेन चोर्ध्वाधोमालापहृतव्याख्यानेन तिर्यगपि मालापहृतं व्याख्यातं द्रष्टव्यं, तत्राप्ययं कल्प्याकल्प्यविधिः—यत्पादस्याधो मञ्चिकादि दत्त्वा गवाक्षादौ स्थितं दानाय बाहुं प्रसार्य महता कष्टेन समाकर्षति तन्न कल्पते, यच्च भूमौ स्वभावस्था गवाक्षादौ स्थितमयत्नेन किञ्चिद्बाहुं प्रसार्य साधोर्दानाय गृह्णाति तन्मालापहृतं न भवति, अतस्तत्कल्पते। तदेवमुक्तं मालापहृतम्, अथाऽऽच्छेद्यद्वारमाह—

अच्छिज्जंपि य तिविहं पभू य सामी य तेणए चेव। अच्छिज्जं पडिकुट्ठं समणाण न कप्पए घेत्तुं ॥ ३६६ ॥

व्याख्या—आच्छेद्यमपि प्रागुक्तशब्दार्थं 'त्रिविधं' त्रिप्रकारं, तद्यथा—'प्रभौ' प्रभुविषयं प्रभुरूपकर्त्राश्रितमित्यर्थः, एवं 'स्वामिनि' स्वामिविषयं, स्तेनकविषयं च। एतच्च त्रिविधमप्याच्छेद्यं तीर्थकरगणधरैः 'प्रतिकुष्टं' निराकृतम्, अतः श्रमणानां तद्ग्रहीतुं न कल्पते। तत्र प्रथमतः प्रभुविषयं भावयति—

गोवालए य भयएऽखरए पुत्ते य धूय सुण्हाए। अचियत्त संखडाई केइ पओसं जहा गोवो ॥ ३६७ ॥

व्याख्या—प्रभुकर्तृकमाच्छेद्यं 'गोपालके' गोपालविषयं, तथा 'भृतकः' कर्मकरस्तद्विषयम्, अक्षरको—द्व्यक्षरकाभिधानो दास इत्यर्थः, तद्विषयं, पुत्रविषयं दुहितृविषयं स्नुषाविषयम्, उपलक्षणमेतत्, भार्यादिविषयं च। अत्रैव दोषमाह—'अचियत्त' इत्यादि, 'अचियत्तम्' अप्रीतिः 'सङ्खडं' कलहः, आदिशब्दादात्मघातादिपरिग्रहः, केचित्पुनः प्रद्वेषमपि साधौ गच्छन्ति, यथा 'गोपः' गोपालकः। एनमेव दृष्टान्तं गाथाद्वयेन भावयति—

गोवपओ अच्छेत्तुं दिन्नं तु जइस्स भइदिणे पहुणा। पयभाणूणं दट्ठुं खिंसइ भोई रुवे चेडा ॥ ३६८ ॥

भोगशब्दो विवक्षणीयः, परिभुज्यते इति परिभोगः—परिभुज्यमानता (स) च उद्देहिकामृत्तिकादेः सर्पदंशादौ दाहोपशमनाय वेदितव्यः, यद्वा—किमपि वैश्रसीन्द्रियविशेषशरीरादिकं वाह्यमलेपादिनिमित्तं वदेत् तद्वा परिभोगस्त्रीन्द्रियाणां तथा चतुरिन्द्रियाणां मध्ये मक्षिकाणां परिहारः—पुरीषं परिभोगः, तद्धि वमननिषेधादौ मत्यलमुपवर्ण्यते, यद्वा—अश्वगाक्षिका उपयुज्यते अक्षिभ्योऽक्षरसमुद्धरणाय चैवेति एवंमाय-चतुरिन्द्रियपरिभोगसमुच्चयार्थः ॥ पञ्चेन्द्रियपिण्डविषये सामान्यत उपयोगमाह—

पंचेंदियपिंडंमि उ अव्ववहारी उ नेरइया ॥ ४९ ॥

व्याख्या—पञ्चेन्द्रियपिण्डे उपयोगविषयतया परिभाव्यमाने सर्वोऽपि तिर्यगादिपिण्डो यथायोगमुपयोगं समायाति, नैरयिकाः पुनः 'अव्यवहारिणः' अनुपयोगिनः ॥ तत्र पञ्चेन्द्रियतिर्यगुपयोगमाह—

चम्मट्ठिदंतनहरोमसिंगअविलाइछगणगोमुत्ते । खीरदधिमाइयाण य पंचिंदियतिरियपरिभोगो ॥ ५० ॥

व्याख्या—पञ्चेन्द्रियतिरश्चां परिभोगश्चर्मास्थिदन्तनखरोमशृङ्गाविलादिच्छगणगोमूत्रे क्षीरदध्यादीनां च, तत्र चर्मणः परिभोगः क्षुरादिधरणार्थं कोशकादिकरणे, अस्थ्नो शृङ्गनखिकादेः, तद्धि शरीरस्फोटापनोदाद्यर्थं वाह्वादौ वध्यते, दन्तस्य शूकरदंष्ट्रायाः, सा हि दृष्टिषु पुष्पिकापनोदाय घर्षित्वा क्षिप्यते, नखानां जीवविशेषसत्कानां, ते हि कापि धूपे पतन्ति गन्धश्च तेषां कस्यापि रोगस्यापनोदाय प्रभवति, रोम्णामविमेषी(वी)लासत्कानां, तन्निष्पन्नो हि कम्बलः साधूनामुपयोगवान्, शृङ्गस्य महिष्यादिसत्कस्य, तद्धि मार्गे गच्छात्परि-

चाकालहीनं शीघ्रं परित्यजति स 'भावे' भावतो विवेकः । इह निर्वाहे सति विशोधिकोटिदोषसम्मिश्रं सकलमपि परित्यक्तव्यम्, अनिर्वाहे तु तावन्मात्रं, तत्र विधिमुपदर्शयितुकामः प्रथमतश्चतुर्भङ्गिकामाह—

सुक्कोल्लसरिसपाए असरिसपाए य एत्थ चउभंगो । तुल्ले तुल्लनिवाए तत्थ दुवे दोन्नऽतुल्ला उ ॥ ३९७ ॥

व्याख्या—अत्र शुष्कस्याऽऽर्द्रस्य च 'सदृशे' समानेऽन्यस्मिन् वस्तुनि मध्ये पतिते सति तथा 'असदृशे' असमानेऽन्यस्मिन् वस्तुनि मध्ये पतिते सति चतुर्भङ्गी भवति, सूत्रे च पुंस्त्वनिर्देश आर्षत्वात्, चत्वारो भङ्गा भवन्तीत्यर्थः, ते चेमे—शुष्के शुष्कं पतितं, शुष्के आर्द्रम्, आर्द्रे शुष्कम्, आर्द्रे आर्द्रमिति, तत्र येन येन पदेन यौ यौ भङ्गौ लब्धौ तौ तौ तथा दर्शयति—'तत्थ'त्ति तत्र 'तुल्ये' समाने सति अन्यस्मिन् वस्तुनि मध्ये तुल्यनिपातेऽधिकरणसदृशस्य वस्तुनः प्रक्षेपे 'द्वौ' प्रथमचतुर्थरूपौ भङ्गौ लब्धौ, तौ च 'सुक्कोल्लसरिसपाए' इत्यनेन पदेन सूचितौ, तथा द्वौ भङ्गौ द्वितीयतृतीयरूपौ 'अतुल्यात्' विसदृशात् प्रक्षिप्यमाणात् लब्धौ, तौ च 'असरिसपाए य' इत्यनेन पदेनोक्तौ । तदेवं चतुर्भङ्गिकामभिधाय सम्प्रत्यत्रैवोद्धरणविधिमाह—

सुक्के सुक्कं पडियं विगिंचिउं होइ तं सुहं पढमो । बीयंमि दवं छोढुं गालंति दवं करं दाउं ॥ ३९८ ॥

तइयंमि करं छोढुं उल्लिंचइ ओयणाइ जं तरइ । दुल्लहदव्वं चरिमे तत्तियमित्तं विगिंचंति ॥ ४९९ ॥

व्याख्या—'शुष्के' वल्लचनकादौ मध्ये यत् 'शुष्कं' वल्लचनकादि पतितं तत्सुखं—जलप्रक्षेपादिकष्टमन्तरेण 'विगिंचिउं होइ' परित्यक्तुं भवति, परित्याज्यं भवतीत्यर्थः, एष प्रथमो भङ्गः, तथा द्वितीये भङ्गे 'शुष्के' वल्लचनकादौ मध्ये कथमप्यार्द्रं तीमनादि विशो-

भ्रष्टानां साधूनां मीलनाय वाद्यते, तथाऽविलादिच्छगणस्य गड्डरिकाया गड्डरकस्य वा, आदिशब्दादन्येषां च पुरीषस्य, गोमूत्रस्य पामाद्युपमर्दने, क्षीरादीनां भोजने ॥ सम्प्रति मनुष्यस्य सचित्तादिभेदात् त्रिविधस्याप्युपयोगमाह—

सच्चित्ते पव्वावण पंथुवएसे य भिक्खदाणाई । सीसट्ठिग अच्चित्ते मीसट्ठिसरक्खपहपुच्छा ॥ ५१ ॥

व्याख्या—सचित्ते इति षष्ठीसप्तम्योरर्थं प्रत्यभेदात् सचित्तस्य मनुष्यस्य प्रयोजनं पथि पृष्टे ' उपदेशः ' कथनं, तथा भिक्षादानम्, आदिशब्दाद्वसत्यादिदानं चोपयोगः, शिरसोऽस्थि, तद्धि लिङ्गे व्याधिविशेषापनोदाय घर्षित्वा दीयते, यद्वा कदाचित्काश्चित्परिरुष्टो राजादिः साधूनां विनाशाय कृतोद्यमो भवेत् ततस्ते साधवः शिरोऽस्थिकमादाय कापालिकवेषेण नंष्ट्वा देशान्तरं व्रजितुमिच्छन्तीति तेन प्रयोजनं, तथा मिश्रस्य मनुष्यस्योपयोगः, 'अट्ठिसरक्ख'त्ति ' अस्थिभिः ' आभरणकल्पैः भूपितस्य सरजस्कस्य सरक्षाकस्य वा भस्मावगुण्ठितवपुष्कस्येत्यर्थः, कापालिकस्य पार्श्वे यत्पथि विषये प्रच्छनम् ॥ सम्प्रति देवताविषयमुपयोगमाह—

खमगाइ कालकज्जाइएसु पुच्छिज्ज देवयं कंचि । पंथे सुभासुभे वा पुच्छेज्जह दिव्व उवओगो ॥ ५२ ॥

व्याख्या—क्षपकादिः, आदिशब्दादत्राऽऽचार्यादिपरिग्रहः, क्षपकस्य हि तपोविशेषाकृष्टत्वेन प्रायः समासन्ना एव देवता भवन्ति तत इह साक्षात्क्षपकग्रहणं कृतं, ' कालकार्यम् ' मरणरूपं प्रयोजनं, तदादिकेषु प्रयोजनेषूपस्थितेषु काञ्चिद्देवतां पृच्छेत्, तथा पथिविषयेषु ' शुभाशुभे ' सापायत्वे निरपायत्वे वा देवतां काञ्चन पृच्छेत्, एष ' दिव्य उपयोगः ' देवताविषय उपयोगः ॥ तदेवं सचित्तादिभेदभिन्नस्त्रिप्रकारोऽपि द्रव्यपिण्डः प्रत्येकं पृथिवीकायादिभेदान्नवविध उक्तः, सम्प्रत्येतेषामेव नवानां पृथिवीकायादीनां द्व्यादिमिश्रणतो मिश्रं द्रव्यपिण्डमभिधित्सुराह—

अहिगरण भद्दपंता कम्मुदय गिलाणए य उड्डाहो । चडुकारी य अवन्नो नियगो अन्नं च णं संके ॥ ४१४ ॥

व्याख्या—यदि बालकजननी भद्रा–धर्माभिमुखी भवति तर्हि भाक्तनैः साधुवचनैरावर्ज्जिता सती अधिकरणम्–आधाकर्मादि करोति, अथ प्रान्ता–धर्मानभिमुखी तर्हि प्रद्वेषं यातीति शेषः, तथा यदि स्वकर्मोदयात्कथमपि स बालो ग्लानो भवति तर्हि 'उड्डाहः' प्रवचनमालिन्यं, यथा साधुना तदानीमालपितः क्षीरं वा पायितोऽन्यत्र वा नीत्वा कस्या अपि स्तन्यं पायितस्तेन ग्लानो जातः, तथा–ऽतीव चाडुकारीति लोके 'अवर्णः' अश्लाघा, तथा 'निजकः' भर्त्ता 'अन्यद्वा' मैथुनादिकं 'णम्' इति वाक्यालङ्कारे तथारूपसाधुवचनश्रवणतः 'शङ्कते' सम्भावयति । अथवा प्रकारान्तरेण धात्रीकरणे यो दोषस्तं दर्शयति—

अयमवरो उ विकप्पो भिक्खायारि सड्ढि अद्धिई पुच्छा । दुक्खसहाय विभासा हियं मे धाइत्तणं अज्ज ॥ ४१५ ॥
वयगंडथुल्लतणुयत्तणेहिं तं पुच्छिउं अयाणंतो । तत्थ गओ तस्समक्खं भणाइ तं पासिउं बालं ॥ ४१६ ॥

व्याख्या—अयमपरो विकल्पो धात्रीकरणे, तमेवाह–भिक्षाचर्याप्रविष्टेन साधुना काचित् श्राद्धिका 'अधृतिः' धृतिरहिता दृष्टा, ततः पृष्टा यथा–किमद्य त्वं सशोका दृश्यसे ?, तत एवमुक्ता सती सा प्राह–यो दुःखसहायो भवति तस्मै दुःखं निवेद्यते, दुःखसहायश्च स उच्यते यो दुःखप्रतीकारसमर्थः, ततः साधुराह–अहं दुःखसहायस्तस्मान्निवेद्यतां मे दुःखं, ततः सा प्राह–अद्य मे–मम धात्रीत्वममुकणिमभीश्वरगृहे 'हृतं' स्फेटितं ततोऽहं विपण्णा, ततः साधुराह–मा त्वं विषादं कार्षीः अहमवश्यं त्वां तत्राचिरेण धात्रीं स्थापयामीति प्रतिज्ञा विधाय तस्याः पार्श्वेऽभिनवस्थापिताया धात्र्या वयःप्रभृतिकमजानानः पृच्छति, यथा किं तस्या वयः–तारुण्यं परिणतं वा ?, गण्डावपि-

अह मीसओ य पिंडो एएसिं चिय नवण्ह पिंडाणं । दुगसंजोगाईओ नायव्वो जाव चरमोत्ति ॥ ५३ ॥

व्याख्या—अथेत्यानन्तर्यद्योतने, केवलपृथिवीकायादिपिण्डाभिधानानन्तरं मिश्रकपिण्डो व्याख्यायते इति द्योतयति, 'मिश्रकः' सजातीयविजातीयद्रव्यमिश्रणात्मकः पिण्डः एतेषामेव नवानां पिण्डानां द्व्यादिसंयोगात्मको ज्ञातव्यः, तद्यथा—पृथिवीकायोऽप्कायश्चेति द्विकसंयोगे प्रथमो भङ्गः, पृथिवीकायस्तेजस्काय इति द्वितीयः, एवं द्विकसंयोगे षट्त्रिंशद्भङ्गा भावनीयाः, तथा त्रिकसंयोगे पृथिवीकायोऽप्कायस्तेजस्काय इति प्रथमो भङ्गः पृथिवीकायोऽप्कायो वायुकाय इति द्वितीयः एवं त्रिकसंयोगे चतुरशीतिर्भङ्गाः, तथा चतुष्कसंयोगे पृथिवीकायोऽप्कायस्तेजस्कायो वायुकाय इति प्रथमो भङ्गः, पृथिवीकायोऽप्कायस्तेजस्कायो वनस्पतिकाय इति द्वितीयः, एवं चतुष्कसंयोगे षड्विंशं शतं भङ्गानां भावनीयं, पञ्चकसंयोगेऽपि षड्विंशं शतं, षट्कसंयोगे चतुरशीतिः, सप्तकसंयोगे षट्त्रिंशत्, अष्टकसंयोगे नव, नवकसंयोगे एकः, सर्वसङ्ख्यया भङ्गानां पञ्च शतानि द्व्यधिकानि, एतेषां च भङ्गानामानयनार्थमियं करणगाथा, "उभयमुहं रासिदुगं हिट्ठिल्लाणंतरेण भय पढमं । लद्धह रासिविभत्ते तस्सुवरि गुणित्तु संजोगा ॥ १ ॥ अस्याक्षरगमनिका—इह नवानां पदानां द्व्यादिसंयोगभङ्गा आनेतुमभिप्रेतास्ततस्तावत्प्रमाणौ द्वौ राशी उभयमुखौ स्थाप्येते, स्थापना चेयं १२३४५६७८९ / ९८७६५४३२१ अत्रैकस्योपरि नवकः, तत एककसंयोगे नव भङ्गा द्रष्टव्याः, न च तत्र करणगाथाया व्यापारः, द्व्यादिसंयोगभङ्गानयनायैव तस्याः प्रवृत्तत्वात्, ततोऽधस्तने राशौ पर्यन्तवर्त्तिन एककस्यानन्तरेण द्विकलक्षणेनोपरितनराशौ प्रथममङ्कं नवकरूपं भजेत्-तस्य भागहारं कुर्यात्, ततो लब्धाः सार्द्धाश्चत्वारः, तेन च सार्द्धचतुष्केणाधोराशिनोपरितने प्रथमेऽङ्के विभक्ते लब्धेन तस्य द्विकलक्षणस्याङ्कस्योपरितनमङ्कमष्टकलक्षणं गुणयेत्—ताडयेत्, जाता षट्त्रिंशत्, इत्थं च गुणयित्वा 'संयोगाः' संयोगभङ्गा वाच्याः, यथा द्विकसंयोगे भङ्गाः षट्त्रिंशदिति, ततो भूयोऽपि त्रिकसंयोगभङ्गानयनाय प्रथमपा-

जामाइपुत्तपइमारणं च केण कहियंति जणवाओ । जामाइपुत्तपइमारएण खंतेण मे सिद्धं ॥ ४३४ ॥

व्याख्या—विस्तीर्णो नाम ग्रामः, तस्योपकण्ठे गोकुलाभिधो ग्रामः, विस्तीर्णग्रामे च धनदत्तो नाम कुडम्बी, तस्य भार्या प्रियमतिः, तस्या दुहिता देवकी, सा च तस्मिन्नेव ग्रामे सुंदरेण परिणीता, तस्याः पुत्रो बलिष्ठो, दुहिता रेवतिः, सा च गोकुलग्रामे सङ्गमेन परिणिन्ये, प्रियमतिश्चायुःक्षयात् पञ्चत्वमुपगता, धनदत्तोऽपि संसारभयभीतः प्रव्रज्यामग्रहीद्, गुरुभिश्च सार्द्धं विहरति । ततः कालान्तरे पुनरपि यथाविहारक्रमं तत्रैव ग्रामे समागतो निजदुहितुर्देवक्या वसतावस्थात्, तदानीं च तयोर्द्वयोरपि ग्रामयोः परस्परं वैरं वर्त्तते, विस्तीर्णग्रामवासिना च लोकेन गोकुलग्रामस्योपरि धाटी सूत्रिता, धनदत्तश्च साधुर्गोकुलग्रामे भिक्षायै चलितवान्, ततो देवक्या दुहित्रा शय्यातर्या भणितो—यथा हे पितः ! त्वं गोकुलग्रामे यास्यसि, ततो निजदौहित्र्या रेवत्याः कथय यथा तत्र जनन्या सन्दिष्टम्—अयं ग्रामस्तव ग्रामस्योपरि छन्नधाटया समागमिष्यति ततः सकलमपि स्वकीयमेकान्ते स्थापयेरिति, ततः साधुना तथैव तस्याः कथितं, तया च निजभर्तुः, तेन च सकलग्रामस्य, ततः सर्वोऽपि ग्रामः सन्नद्धबद्धकवचोऽभवत्, आगतश्च द्वितीयदिने धाट्या विस्तीर्णग्रामो, जातं परस्परं महद्युद्धं, तत्र सुन्दरो बलिष्ठश्च धाट्या सह गतौ, सङ्गमश्च गोकुलग्रामे वसति, तत्र त्रयोऽपि च युद्धे पञ्चत्वमुपजग्मुः, देवकी च पतिपुत्रजामातृमरणमाकर्ण्य विलपितुं प्रावर्त्तत, लोकश्च तन्निवारणाय समागतोऽवादीत्—यदि गोकुलग्रामो धाटीमागच्छन्तीं नाज्ञास्यत् ततोऽसन्नद्धो नायोत्स्यत, तथा च न तव पत्यादयो म्रियेरन्, ततः केन दुरात्मना गोकुलग्रामो ज्ञापितः?, एतच्च लोकस्य वचः श्रुत्वा सञ्जातकोपा सैवमवादीत्—मयाऽजानत्या पित्रा दुहितुः सन्दिष्टं, ततस्तेन साधुवेषविडम्बकेन मत्पतिपुत्रजामातृमारकेण पित्रा ज्ञापितः, ततः स लोके स्थाने स्थाने धिक्कारं लभते । प्रवचनस्य च मालिन्यमुदपादि । सूत्रं सुगमम्, उक्तं दूतीद्वारम्, अथ निमित्तद्वारमाह—

दरहिता करणगाथा व्यापार्यते, अधस्तने राशौ स्थितेन द्विकादनन्तरेण त्रिकेणोपरितनराशिव्यवस्थितं त्रिकोपरितनसप्तकरूपाङ्कापेक्षया आद्यं षट्त्रिंशद्रूपमङ्कं भजेत्, ततो लब्धा द्वादश तैश्चाधोराशिनोपरितनेऽङ्के विभक्ते लब्धैस्त्रिकलक्षणस्याङ्कस्योपरितनं सप्तकलक्षणमङ्कं गुणयेत्, गुणिते च सति जाताश्चतुरशीतिः, एतावन्तस्त्रिकसंयोगेष्वपि भङ्गा आनेतव्याः, यावन्नवकसंयोगे एको भङ्गः, तथा चाह—'जाव चरिमो'त्ति तावद्द्विकसंयोगादिको मिश्रपिण्डो ज्ञातव्यो यावच्चरमो नवकनिष्पन्न एकसङ्ख्यो मिश्रपिण्डः, स च लेपमधिकृत्योपदर्श्यते, इहाक्षस्य धुरि म्रक्षितायां रजोरूपः पृथिवीकायो लगति, नदीमुत्तरतोऽप्कायः, लोहमयावपनघर्षणे तेजस्कायः, यत्र तेजस्तत्र वायुरिति वायुकायोऽपि, वनस्पतिकायो धूरेव, द्वित्रिचतुरिन्द्रियाः सम्पातिमाः सम्भवन्ति, महिष्यादिचर्मनयनाडिकादेश्च घृष्यमाणस्यावयवरूपः पञ्चेन्द्रियपिण्डः, इत्थंभूतेन चाक्षस्य खञ्जनेन लेपः क्रियते इत्यसावुपयोगी, इतिशब्दो मिश्रपिण्डसमाप्त्यर्थः, एतावानेव द्रव्यपिण्डो मिश्रः सम्भवतीति ॥ सम्प्रत्यस्यैव मिश्रपिण्डस्य कानिचिदुदाहरणान्युपदर्शयति—

सोवीरा गोरसासव वेसण भेसज्ज नेह साग फले । पोग्गल लोण गुलोयण णेगा पिण्डा उ संजोगे ॥ ५४ ॥

व्याख्या—'सौवीरं' काञ्जिकं, तच्चाप्कायतेजस्कायवनस्पतिकायादिपिण्डरूपं, तथाहि—तत्राप्कायस्तण्डुलधावनं तेजस्कायोऽवश्रावणं वनस्पतिकायस्तण्डुलावयवा यत्सम्पर्कतस्तण्डुलोदकं गडुलमुपजायते, लवणावयवाश्च केचन तत्र लवणसम्मिश्रतण्डुलोदकादिभिः सह पतन्ति ततस्तत्र पृथिवीकायोऽपि सम्भवतीति, एवमन्यत्रापि भावना स्वधिया कर्त्तव्या, तथा 'गोरसं' तक्रादि, तच्चाप्कायत्रसकायसम्मिश्रं भवति, तथा 'आसवः' मद्यं, तच्चाप्कायतेजस्कायवनस्पतिकायादिपिण्डरूपं, 'वेसनं' जीरकलवणादि, तच्च वनस्पतिपृथिवीकायादिपिण्डरूपं, 'भेषजं' यवागूप्रभृति, तच्चाप्कायतेजस्कायवनस्पतिकायपिण्डरूपं, 'स्नेहः' घृतवशादि, तच्च तेजस्कायत्रसकायादिपिण्डरूपं, 'शा-

प्रातरेवोत्थाय कृताञ्जलिप्रग्रहो वदति–दयिते! किं करोमि?, सा च वदति–तडागादुदकमानय, ततो यत्प्रिया समादिशतीत्युदित्वा तडागादुदकमानयति, पुनरपि भणति–किं करोमि प्राणेश्वरि!, सा वदति–कुसूलादाकृष्य तण्डुलान् कण्डय, एवं यावद्भोजनादूर्ध्वं मम पादान् प्रक्षाल्य घृतेन फाणयेति, स च सर्वं तथैव करोति, तत एवं लोकेन ज्ञात्वा तस्य किङ्कर इति नाम निवेशितं, एष किङ्करः। तथा क्वचिद्ग्रामे कोऽपि पुरुषो भार्याऽऽदेशवर्त्ती, स चान्यदा निजभार्यामवादीत्–प्राणेश्वरि! स्नातुमहमिच्छामि, तयोक्तं–यद्येवं तर्ह्यामलकान् शिलायां वर्त्तय परिधेहि स्नानपोतिकां अभ्यङ्ग्य तैलेनात्मानं गृहाण च घटं ततस्तडागे स्नात्वा घटं च जलेन भृत्वा समागच्छेति, स च देवताशेषामिव भार्याऽऽदेशं शिरसि निधाय तथैव करोति, एवं च सर्वदैव, ततो लोकेनास्यार्थस्य प्रकटनार्थं हासेनास्य स्नायक इति नाम कृतं, एष स्नायकः। तथा क्वचिद्ग्रामे कोऽपि पुरुषो भार्याऽऽदेशविधायी, अन्यदा च सा रसवत्यामासने समुपविष्टा वर्त्तते, सा च तेन भोजनमयाचि, तयोक्तं–मम समीपे स्थालमादाय समागच्छेः, सोऽपि यत्प्रियतमा समादिशति तन्मे प्रमाणमिति ब्रुवंस्तस्याः समीपे गतः, तया परिवेषितं भोजनं, तत उक्तं–भोजनस्थाने गत्वा भुङ्क्ष्व, ततः स भोजनस्थानं गत्वा भोक्तुं प्रवृत्तः, ततः पुनरपि तेन तीमनं याचितं, सा च प्रत्युवाच–स्थालमादाय मम समीपे समागच्छेः, ततः स गृध्र इव उत्कटिको रिङ्खन् स्थालेन गृहीतेन याति, एवं तक्रादिकमपि गृह्णाति, तत एतल्लोकेन ज्ञात्वा हासेन गृध्रइवरिङ्खीति नाम कृतं, एष गृध्रइवरिङ्खी। तथा क्वचिद्ग्रामे भार्यामुखप्रलोकनसुखलम्पटस्तदादेशकारी कोऽपि पुरुषः, तस्यान्यदा स्वभार्यया सह विषयसुखमनुभवतः पुत्रो बभूव, स च पालनक एव स्थितोऽतिबालत्वात् पुरीषमुत्सृजति, तेन च पुरीषेण पालनकं बालवस्त्राणि च खरण्ट्यन्ते, ततः सा भणति–बालस्य पुते प्रक्षालय पालनकं बालवस्त्राणि च, ततो यत्प्रिया समादिशति तत्करोमीति वदंस्तथैव करोति, एवं सर्वदैव, ततो लोकेनैतद् ज्ञात्वा हदनं प्रक्षाल-

कः' वत्थुलभर्ज्जिकादिरूपः, स च वनस्पतिकायपृथिवीकायत्रसकायादिपिण्डरूपः, 'फलम्' आमलकादि, तच्चेह पकं ग्राह्यं, ततस्तदपी-
स्थमेव भावनीयं, 'पोग्गलं' मांसं, तदपीह पकं गृह्यते, ततस्तदपि शाकवद्भावनीयं, 'लवणं' प्रतीतं, तच्चाप्कायपृथिवीकायरूपं, 'गुडौ-
दनौ' प्रतीतौ, तावपि फलवद्भावनीयौ, एवमन्येऽप्यनेके यथासम्भवं संयोगे पिण्डा भावनीयाः, केवलं तं तं संयोगं परिभाव्य यो यत्र
द्विकसंयोगादावन्तर्भवति स तत्र स्वयमेवान्तर्भावनीयः ॥ तदेवमुक्तः सप्रपञ्चं द्रव्यपिण्डः, सम्प्रति क्षेत्रकालपिण्डावभिधित्सुराह—

तिन्नि उ पएससमया ठाणट्ठिइउ दविए तयाएसा । चउपंचमपिंडाणं जत्थ जया तप्परूवणया ॥ ५५ ॥

व्याख्या—इह क्षेत्रकालपिण्डौ 'नामं ठवणापिंडे दव्वे खेत्ते य काल भावे य' इति गाथानिर्देशक्रमापेक्षया चतुर्थपञ्चमपिण्डौ,
क्षेत्रम्-आकाशं कालः-समयविवर्त्तरूपः, तत्र त्रयः प्रदेशाः क्षेत्रप्रस्तावादाकाशप्रदेशाः तथा त्रयः समयाः कालस्य निर्विभागा भागाः,
तुशब्दो विशेषणार्थः, स च परस्परमनुगता इति विशेषयति, 'चतुष्पञ्चमपिण्डयोः' क्षेत्रकालपिण्डयोः स्वरूपम्, इयमत्र भावना—त्रयः पर-
स्परमनुगता आकाशप्रदेशास्त्रयः परस्परमनुगताः समया यथाक्रमं क्षेत्रपिण्डः कालपिण्ड इति वेदितव्याः, त्रिग्रहणं चोपलक्षणं, तेन
द्विचतुरादयोऽपि द्रष्टव्याः, तदेवं क्षेत्रकालपिण्डौ निरुपचरितौ प्रतिपाद्य सम्प्रति तावेव सोपचारावभिधत्ते—'ठाणट्ठिइउ दविए तयाएसा'
'दविएत्ति' द्रव्ये-पुद्गलस्कन्धरूपे स्थानम्-अवगाहः स्थितिः-कालतोऽवस्थानं स्थानं च स्थितिश्च स्थानस्थिती ताभ्यां स्थानस्थितितः
अत्र पञ्चमी 'ल्यपः कर्म्माधारे' इत्यनेन सूत्रेण, ततोऽयमर्थः—स्थानं स्थितिं चाश्रित्य यस्तदाऽऽदेशः—क्षेत्रकालादेशः क्षेत्रकालप्राधा-
न्यविवक्षया क्षेत्रेण कालेन च व्यपदेशस्तस्माच्चतुष्पञ्चमपिण्डयोः प्ररूपणा कार्या, किमुक्तं भवति ?—स्कन्धरूपे पुद्गलद्रव्येऽवगाहचिन्तामा-
श्रित्य क्षेत्रप्राधान्यविवक्षया यदा क्षेत्रेण व्यपदेशो यथा एकप्रादेशिकोऽयं द्विप्रादेशिकोऽयं त्रिप्रादेशिक इत्यादि स इत्थं क्षेत्रतो व्यपदिश्यमानः

विचिन्त्य कुष्ठिरूपं कृत्वा चतुर्थवेलायां प्रविष्टः, लब्धश्चतुर्थो मोदकः, एतानि च रूपाणि कुर्वन् मालोपरिस्थितेन विश्वकर्मणा नटेन ददृशे, चिन्तितं चानेन—सम्यगेषोऽस्माकं मध्ये नटो भवति, परं केनोपायेन सङ्ग्रहीतव्य इति, एवं च चिन्तयतः समुत्पन्ना तस्य शेमुषी—दुहितृभ्यां क्षोभयित्वा ग्रहीतव्य इति, ततो मालादुत्तीर्य सादरमाकार्याऽऽषाढभूतिः पात्रभरणप्रमाणैर्मोदकैः प्रतिलाभितः, भणितश्च सादरं—भगवन् ! प्रतिदिवसमस्माकं भक्तपानग्रहणेनानुग्रहोऽनुविधातव्यः, ततो गतः स्वोपाश्रयमाषाढभूतिः, अचकथच्चान्यान्यरूपपरावर्त्तनवृत्तान्तं विश्वकर्म्मा निजकुटुम्बस्य, भणिते च दुहितरौ यथा सादरं दानस्नेहदर्शनादिना तथा कर्त्तव्यो यथा युष्माकमायत्तो भवति प्रतिदिनसमायाति च भिक्षार्थमाषाढभूतिः, दुहितरौ च तं तथैवोपचरतः, ततोऽत्यन्तमनुरक्तमवगम्य रहसि भणितो—यथा वयमत्यन्तं तवानुरक्ताः ततोऽस्मान् परिणीय त्वं परिभुङ्क्ष्वेति, अनान्तरे च तस्योदयमियाय चारित्रावरणं कर्म्म गलितो गुरूपदेशः प्राणेशद्विवेको दूरीभूतः कुलजात्यभिमानः, ततस्तेनोक्तम्—एवं भवतु, परमहं गुरुपादान्तिके लिङ्गं विमुच्य समागच्छामि, गतो गुरुसमीपं प्रणतस्तेषां पादयुगलं प्रकटितो निजाभिप्रायः, ततो गुरुभिरवाचि—वत्स ! नेदं युष्मादृशां विवेकरत्नाकराणामवगाहितसकलशास्त्रार्थानामुभयलोकजुगुप्सनीयं समाचरितुमुचितं, तथा "दीहरसीलं परिवालिऊण विसएसु वच्छ ! मा रमसु । को गोपयंमि बुड्डइ उयहिं तरिऊण बाहाहिं ? ॥ १ ॥" इत्यादि, तत उवाचाषाढभूतिः—भगवन् ! यथा यूयमादिशथ तथैव केवलं प्रतिकूलकर्मोदयतः प्रतिपक्षभावनारूपकवचदुर्बलतया मदनशबरेण निरन्तरं समुत्रस्तमृगनयनरमणीकटाक्षविशिखोपनिपातमादधता शतशो मे जर्जरीकृतं हृदयं, एवं चोक्त्वा गुरुपादान् प्रणम्य तदन्तिके रजोहरणं मुक्तवान्, ततः कथमहममीषामनुपकृतोपकारिणामपारसंसारोदधिनिमग्नजन्तुसमुद्धरणैकचेतसां सकलजग-

१ दीर्घं शीलं परिपाल्य विषयेषु वत्स ! मा रंसीः । को गोष्पदे निमज्जति उदधिं बाहुभ्यां तरित्वा ? ॥ १ ॥

क्षेत्रपिण्ड इत्युच्यते, क्षेत्रतो व्यपदिष्टः पिण्डः क्षेत्रपिण्ड इति व्युत्पत्तेः, यदा तु कालतोऽवस्थानमधिकृत्य कालप्राधान्यविवक्षया कालेन व्यपदेशो यथा–एकसामयिको द्विसामयिक इत्यादि तदा स कालपिण्डोऽपि भण्यते, कालतो व्यपदिष्टः पिण्डः कालपिण्ड इति समासाऽऽश्रयणात्, अथवा त्रिप्रदेशाद्यात्मकक्षेत्रपिण्डे यादिवा त्रिसमयाद्यात्मक कालपिण्डे यद्वास्थितं पुद्गलद्रव्यं तत्तदादेशात् क्षेत्रकालव्यपदेशात्–क्षेत्रकालोपचारादित्यर्थः, यथाक्रमं क्षेत्रपिण्डः कालपिण्डः । प्रकारान्तरेण सोपचारौ क्षेत्रकालपिण्डावाह–'जत्थ जया तप्परूवणया' 'यत्र' वसत्यादौ यदा प्रथमपौरुष्यादौ 'तत्प्ररूपणा' पिण्डप्ररूपणा क्रियते स पिण्डः प्ररूप्यमाणो नामादिपिण्डो वसत्यादिक्षेत्रमधिकृत्य क्षेत्रपिण्ड उच्यते, यथाऽमुकवसतिरूपक्षेत्रपिण्ड इति, प्रथमपौरुष्यादिकं तु कालमधिकृत्य कालपिण्डो यथाऽमुकप्रथमप्रहरादिरूपः कालपिण्ड इति ॥ 'इह तिन्नि उ पएससमया' इत्यत्र पर आक्षेपमाह–ननु मूर्त्तेषु द्रव्येषु परस्परमनुवेधतः सङ्ख्याबाहुल्यतश्च पिण्ड इति व्यपदेशो घटते, क्षेत्रकालयोस्तु न परस्परमनुवेधो नापि काले सङ्ख्याबाहुल्यं, तथाहि–क्षेत्रमाकाशमुच्यते 'खेत्तं खलु आगास'मिति वचनात्, तच्च नित्यमकृत्रिमत्वात्, ततः सदैव विविक्तप्रदेशात्मकतया व्यवस्थितमिति कथमाकाशप्रदेशानामनुवेधः ?, एकत्र मिश्रणाभावात्, कालोऽपि पूर्वापरसमयविविक्तो वार्त्तमानिकसमयरूप एव पारमार्थिकः, पूर्वापरसमययोर्विनष्टानुत्पन्नत्वेन परमार्थतोऽसत्त्वात्, सतां च परस्परमनुवेधः सङ्ख्याबाहुल्यं वा नासतां सदसतां वा, ततः कालद्वयमपि नोपपद्यते इति कथं तत्र पिण्ड इति व्यपदेशः ?, अत्र प्रतिविधानमभिधित्सुराह—

मुत्तदविएसु जुज्जइ जइ अन्नोऽन्नाणुवेहओ पिंडो । मुत्तिविमुत्तेसुवि सो जुज्जइ नणु संखबाहुल्ला ॥ ५६ ॥

व्याख्या—ननु यदि मूर्त्तेषु द्रव्येषु 'अन्योऽन्यानुवेधतः' परस्परानुवेधतः, 'संखबाहुल्ला' इत्यप्यत्र सम्बध्यते, 'सङ्ख्याबाहुल्यतश्च' द्व्यादिसङ्ख्यासम्भवतश्च पिण्ड इति व्यपदेशो 'युज्यते' योगमुपैति घटते इत्यर्थः, तर्हि स पिण्ड इति व्यपदेशः 'मूर्त्तिविमु-

वम्-ईषदश्रुविमोचनं करोति, ततः 'पुच्छ'त्ति सा स्त्री पृच्छति, किं त्वमधृतो दृश्यसे ? इति, ततः साधोः कथनं-मम 'ईदृशी' त्वत्सदृशी जनन्यभूदिति । अत्र दोपानाह-ततस्तया मातृत्वमकल्पनार्थं साधुमुखे स्तनप्रक्षेपः क्रियते, परस्परं च सम्बन्धः स्नेहबुद्धिरूपो जायते, तथा विधवास्नुषादिदानं च करोति-मृतपुत्रस्य स्थानेऽयं मे पुत्र इति बुद्धया स्वस्नुषादानं कुर्यात्, आदिशब्दात् स्नेहवशतो दास्यादिदानं च, उक्तं पूर्वसम्बन्धिसंस्तवोदाहरणं, एवं पश्चात्सम्बन्धिसंस्तवोदाहरणमपि भावनीयं । सम्प्रति पुनः पश्चात्सम्बन्धिसंस्तवे दोपानाह—

पच्छासंथवदोसा सासू विहवादिधूयदाणं च । भज्जा ममेरिसिच्चिय सज्जो घाउ वयभंगो वा ॥ ४८८ ॥

व्याख्या—पश्चात्सम्बन्धिसंस्तवयिमे दोपाः-श्वश्रूरीदृशी ममाऽऽसीदित्युक्ते सा विधवाया आदिशब्दात्कुरण्डादिरूपायाः सुताया दानं करोति, तथा भार्या ममेदृश्यभवदित्युक्ते यदीर्ष्यालुस्तद्भर्त्ता समीपे च वर्त्तते तदा मम भार्याऽनेन स्वभार्या कल्पितेति विचिन्त्य साधोर्घातं कुर्यात्, अथेर्ष्यालुस्तद्भर्त्ता न भवति समीपे वा न वर्त्तते तदा भार्याऽहमनेन कल्पितेत्युन्मत्ता भार्येव समाचरंती चित्तक्षोभमापादयेत्, ततो व्रतभङ्गः । एवं तावत्पूर्वसम्बन्धिसंस्तवस्य पश्चात्सम्बन्धिसंस्तवस्य च प्रत्येकमसाधारणान् दोपानभिधाय सम्प्रत्युभयोरपि साधारणानभिधित्सुराह—

मायावी चडुयारी अम्हं ओहावणं कुणइ एसो । निच्छुभणाई पंतो करिज्ज भद्देसु पडिबंधो ॥ ४८९ ॥

व्याख्या—अधृतिदृष्टिप्रस्त्रवादि कुर्वन्मायावी एपोऽस्माकमावर्ज्जनानिमित्तं चाटूनि करोतीति निन्दा, तथाऽस्माकं स्वस्य कार्पटिकप्रायस्य जनन्यादिकल्पनेनापभ्राजनं विधत्ते, ततः एवं विचिन्त्य प्रान्तः स्वगृहनिष्काशनादि करोति, अथ ते गृहिणो भद्रा भवेयुस्तर्हि

क्तेष्वपि ' मूर्त्तिरहितेष्वपि अमूर्त्तेष्वित्यर्थः, क्षेत्रप्रदेशकालसमयेषु युज्यते, तत्रापि पिण्डशब्दप्रवृत्तिनिमित्तस्य परस्परानुवेधस्य सङ्ख्याबाहुल्यस्य च सम्भवात्, तथाहि–सर्वेऽपि क्षेत्रप्रदेशाः परस्परं नैरन्तर्यलक्षणेन सम्बन्धेन सम्बद्धा अवतिष्ठन्ते, ततो यथा बादरनिष्पादिते चतुरस्रादिघने परस्परनैरन्तर्यरूपानुवेधतः सङ्ख्याबाहुल्यतश्च पिण्ड इति व्यपदेशः प्रवर्त्तते तथा क्षेत्रप्रदेशेष्वपि पिण्डशब्दः प्रवर्त्तमानो न विरुध्यते, तत्रापि परस्परनैरन्तर्यरूपस्यानुवेधस्य सङ्ख्याबाहुल्यस्य च सम्भवात्, तथा कालोऽपि परमार्थतः सन् द्रव्यं च, ततः सोऽपि परिणामी, सतः सर्वस्य परिणामित्वाभ्युपगमाद्, अन्यथा सत्त्वायोगात्, एतच्चान्यत्र धर्मसङ्ग्रहणिटीकादौ विभावितमिति नेह भूयो विभाव्यते, ग्रन्थगौरवभयात्, परिणामी चान्वयी तेन तेन रूपेण परिणममान उच्यते, ततोऽस्ति वार्त्तमानिकस्यापि समयस्य पूर्वापरसमयाभ्यामनुवेधः, केवलं तौ पूर्वापरसमयावसन्तावपि बुद्ध्या सन्ताविव विवक्षितौ, ततः सङ्ख्याबाहुल्यमपि तत्रास्तीति पिण्डशब्दप्रवृत्त्यविरोधः ॥ सम्प्रति क्षेत्रे पिण्डशब्दप्रवृत्त्यविरोधं दृष्टान्तद्वारेण समर्थयते—

जह तिपएसो खंधो तिसुवि पएसेसु जो समोगाढो । अविभागेण संबन्धो कहं तु नेवं तदाधारो ? ॥ ५७ ॥

व्याख्या—यथा कश्चिदनिर्दिष्टव्यक्तिकः ' त्रिप्रदेशिकः ' त्रिपरमाण्वात्मकः स्कन्धस्त्रिष्वप्याकाशप्रदेशेष्ववगाढो न त्वेकस्मिन् द्वयोर्वेत्यपिशब्दार्थः, 'अविभागेन सम्बन्धो ' विभागो–नैरन्तर्याभावस्तदभावोऽविभागो नैरन्तर्यमित्यर्थः तेन सम्बन्धो नैरन्तर्यसम्बन्धसम्बद्ध इति भावः, पिण्ड इति व्यपदिश्यते, नैरन्तर्येणावस्थानभावात् सङ्ख्याबाहुल्यतश्च, एवं–त्रिप्रदेशावगाढत्रिपरमाणुस्कन्ध इव तदाधारः–त्रिपरमाणुस्कन्धाधारः प्रदेशत्रयसमुदायः कथं तु न पिण्ड इति व्यपदिश्यते ?, सोऽपि पिण्ड इति व्यपदिश्यताम् , उभयत्राप्युक्तनीत्या विशेषाभा-

अपि कृष्णानद्याः कूले एकत्र मिलिते, जातो विस्मयो लोकस्य सपरिवारस्य च कुलपतेः, ततो गृहीता सपरिवारेण कुलपतिना दीक्षा, सा ब्रह्मशाखा बभूव। सूत्रं सुगमं। तदेवं 'पायलेवणे जोगे' इति व्याख्यातं, तद्व्याख्यानाच्च योगद्वारं समर्थितं। सम्प्रति 'मूल'त्ति व्याचिख्यासुराह—

अधिई पुच्छा आसन्न विवाहे भिन्नकन्नसाहणया। आयमणपियणओसह अक्खय जज्जीवअहिगरणं ॥ ५०६ ॥

जंघापरिजिय सड्ढी अद्धिइ आणिज्जए मम सवत्ती। जोगो जोणुग्घाडण पडिसेह पओस उड्डाहो ॥ ५०७ ॥

व्याख्या—कचित्पुरे धननाम्नः श्रेष्ठिनो भार्या धनप्रिया, तस्य दुहिता सुन्दरी, सा च भिन्नयोनिका, परमेनमर्थं माता जानाति न पिता, सा च पित्रा तत्रैव पुरे कस्यापीश्वरपुत्रस्य परिणयनाय दत्ता, समागतः प्रत्यासन्नो विवाहो, मातुश्चिन्ता बभूव एषा परिणीता सती यदि भर्त्रा भिन्नयोनिका ज्ञास्यते ततस्तेनोज्झिता वराकी दुःखमनुभविष्यति, अत्रान्तरे च समागतः कोऽपि संयतो भिक्षार्थं, तेन सा पृष्टा, तया कथितः सर्वोऽपि वृत्तान्तः, ततः साधुनोक्तं—मा भैषीरहमभिन्नयोनिकां करिष्यामि, तत आचमनौषधं पानौषधं च तस्यै प्रदत्तं, जाता अभिन्नयोनिका। तथा चन्द्राननायां पुरि धनदत्तः सार्थवाहस्तस्य भार्या चन्द्रमुखा, तयोश्चान्यदा परस्परं कलहः प्रवृत्तः, ततोऽभिनिवेशेन तन्नगरवास्तव्यस्यैव कस्यापीश्वरस्य दुहिता धनदत्तेन परिणयनार्थं वृता, ज्ञातश्चायं वृत्तान्तश्चन्द्रमुखया, ततो बभूव महती तस्या अधृतिः, अत्रान्तरे च जङ्घापरिजितनामा साधुरागतो भिक्षार्थं, दृष्टा तेनाधृतिं कुर्वती चन्द्रमुखा, ततः पृष्टा—किं भद्रे! त्वमधृतिमती दृश्यसे?, ततः कथितस्तया सपत्नीव्यतिकरः, ततः साधुना समर्पितं तस्या औषधं, भणिता च सा—कथमपि तस्या भक्तस्य पानस्य मध्ये देयं येन सा भिन्नयोनिका भवति, ततः स्वभर्त्रे निवेदयेः, येन सा न परिणीयते, तथैव कृतं, न परिणीता सा भर्त्रेति। सूत्रं सुगमं। नवरं

वात् ॥ सम्प्रति 'जत्थ जया तप्परूवणया' इत्येतद्व्याचिख्यासुर्नामस्थापनाद्रव्यभावपिण्डानां योगविभागसम्भवात् पारमार्थिकं पिण्डत्वं क्षेत्रकालयोस्तु योगविभागासम्भवत औपचारिकं प्रतिपादयन्नाह—

अहवा चउण्ह नियमा जोगविभागेण जुज्जए पिण्डो । दोसु जहियं तु पिण्डो वण्णिज्जइ कीरए वावि ॥ १८ ॥

व्याख्या—अथवेति प्रकारान्तरद्योतने, पूर्वं हि क्षेत्रकालयोर्यथासङ्ख्यं प्रदेशसमयानां परस्परानुवेधतः सङ्घातमङ्गीकृत्य पारमार्थिकं पिण्डत्वमुक्तं, यद्वा तत्र युज्यत एव, योगविभागासम्भवात्, तथाहि—लोके यत्र योगे सति विभागः कर्तुं शक्यते विभागे वा सति योगः तत्र पिण्ड इति व्यपदेशः, न च क्षेत्रप्रदेशेषु योगे सत्यपि विभागः कर्तुं शक्यः, नित्यत्वेन तेषां तथा व्यवस्थितानामन्यथा कर्तुमशक्यत्वात्, ततो न तत्र पारमार्थिकं पिण्डत्वं, तथा समयो वर्त्तमान एव सन् नातीतोऽनागतो वा, तयोर्विनष्टानुत्पन्नत्वेनाविद्यमानत्वात्, ततोऽत्र विभाग एव न तु कदाचनापि योग इति पारमार्थिकपिण्डत्वाभावः, ततोऽन्यथा क्षेत्रकालपिण्डप्ररूपणा कर्त्तव्येति प्रकारान्तरता, 'चतुर्णां' नामस्थापनाद्रव्यभावपिण्डानां 'योगविभागेन' योगविभागसम्भवेन नियमात्पिण्ड इति व्यपदेशो युज्यते, तथाहि—नाम्नः पिण्डो नामनामवतोरभेदोपचारात् यद्वा नाम्ना पिण्डो नामपिण्ड इति व्युत्पत्तेः पुरुषादिकमेव भण्यते, तस्य, च हस्तपादादिभिरवयवैर्युक्तस्यापि खड्गादिभिर्विभागः कर्तुं शक्यते इत्यस्ति योगे सति विभागः, यद्वा पूर्वं गर्भे मांसपेशीरूपस्य सतो हस्तादिभिरवयवैर्वियोगः पश्चात्क्रमेण तैः सह संयोग इति विभागे सति योगः ततः पिण्डरूपता, तथा स्थापनापिण्डेऽक्षनिकादिषु पूर्वं विभागे सति संयोगः संयोगे वा सति विभाग इति पिण्डरूपता, द्रव्यपिण्डेऽपि गुडौदनादिके विभागपूर्वकः संयोगः संयोगपूर्वको वा विभागः सुप्रतीत इति पारमार्थिकपिण्डरूपता, भावपिण्डेऽपि भावभाववतोः कथञ्चिदभेदात्साध्वादिरेव मूर्त्तो विग्रहवान् गृह्यते, तत्र संयोगविभागौ नामपिण्ड इव तात्त्विका-

यत्साध्वर्थं कर्म हस्तमात्रादेर्जलप्रक्षालनादि क्रियते तत्पुरःकर्म । यत्पुनर्भक्तादेर्दानात्पश्चात्क्रियते तत्पश्चात्कर्म । सस्निग्धम्—ईषल्लक्ष्यमाणजलखरण्टितं हस्तादि, उदकार्द्रं स्पष्टोपलभ्यमानसंसर्गं । सम्प्रति वनस्पतिकायम्रक्षितं प्रपञ्चयति—

उक्किट्ठरसालित्तं परित्तऽणंतं महिरुहेसु ॥ ५३४ ॥

व्याख्या—'उत्कृष्टरसानि' प्रचुररसोपेतानि यानि 'परित्तानां' प्रत्येकवनस्पतीनां चूतफलादीनाम्, अनन्तानाम्—अनन्तकायिकानां च पनसफलादीनां सद्यःकृतानि श्लक्ष्णखण्डानि इति सामर्थ्याद्गम्यते, तैः 'आलिप्तं' खरण्टितं यद्धस्तादि, तन्महीरुहेषु, अत्र च तृतीयार्थे सप्तमी, महीरुहैर्म्रक्षितमवसेयं, 'परित्तणंतं' इत्यत्र प्राकृतत्वाद्विभक्तिवचनव्यत्यय इति षष्ठीबहुवचनं व्याख्यातं ।

सेसेहिं काएहिं तीहिवि तेऊसमीरणतसेहिं । सच्चित्तं मीसं वा न मक्खितं अत्थि उल्लं वा ॥ ५३५ ॥

व्याख्या—शेषैस्तेजःसमीरणत्रसरूपैस्त्रिभिरपि सचित्तरूपं मिश्ररूपमार्द्रतारूपं वा म्रक्षितं न भवति, सचित्तादितेजस्कायादिसंसर्गेऽपि लोके म्रक्षितशब्दप्रत्ययदर्शनात्, अचित्तैस्तु तैर्भस्मादिरूपैः पृथिवीकायेनेव म्रक्षितत्वसम्भव इति न तस्य प्रतिषेधः, वातकायेन त्वचित्तेनापि न म्रक्षितत्वं घटते, तथा लोके प्रतीत्यभावात् । सम्प्रति सचित्तपृथिवीकायादिम्रक्षिते हस्तमात्रे आश्रित्य भङ्गान् कल्प्याकल्प्यविधिं च प्रतिपादयति—

सच्चित्तमक्खियंमी हत्थे मत्ते य होइ चउभंगो । आइतिए पडिसेहो चरिमे भंगे अणुन्नाओ ॥ ५३६ ॥

व्याख्या—'सचित्तैः' पृथिवीकायादिभिर्म्रक्षिते हस्ते मात्रे च 'चतुर्भङ्गी' चत्वारो भङ्गाः, सूत्रे च पुंस्त्वनिर्देश आर्षत्वात्,

विति पारमार्थिकी पिण्डरूपता, क्षेत्रकालयोरतूक्तनीत्या न संयोगविभागाविति न तत्र पिण्डशब्दप्रवृत्तिः, तस्मान्नामादिपिण्ड एव तत्तत् क्षेत्र-
निवासादिकं पर्यायमुद्भूतरूपं विवक्षित्वा क्षेत्रपिण्डकालपिण्डशब्दाभ्यां व्यपदिश्यते, तथा चाह—'दोसु जहिंयं तु' इत्यादि 'द्वयोः' क्षेत्र-
कालयोः 'यत्र' वसत्यादौ यदा वा प्रथमपौरुष्यादौ यः पिण्डो नामादिरूपो व्यावर्ण्यते यद्वा यत्र गृहे महानसादौ वा पिण्डो गुडपिण्डा-
दिर्मोदकादिपिण्डो वा क्रियते यदा वा प्रथमप्रहरादौ निष्पाद्यते स व्यावर्ण्यमानो नामादिपिण्डः क्रियमाणो वा गुडोदनादिपिण्डस्तत्क्षे-
त्रकालापेक्षया क्षेत्रपिण्डः कालपिण्डश्च व्यपदिश्यते, यथाऽमुकवसत्यादिक्षेत्रपिण्डः प्रथमपौरुषीपिण्ड इत्यादि ॥ उक्तौ क्षेत्रकालपिण्डौ, स-
म्प्रति भावपिण्डमभिधित्सुराह—

दुविहो उ भावपिण्डो पसत्थओ चेव अप्पसत्थो य । एएसिं दोण्हंपि य पत्तेय परूवणं वोच्छं ॥ ५९ ॥

व्याख्या—'द्विविधः' द्विप्रकारः भावपिण्डः, तद्यथा—प्रशस्तोऽप्रशस्तश्च, तत एतयोर्द्वयोरपि प्रत्येकं प्ररूपणां—प्ररूप्येते द्वावपि
भावपिण्डौ यया गाथापद्धत्या सा प्ररूपणा तां वक्ष्ये ॥ प्रतिज्ञातमेव गाथाचतुष्टयेन निर्वाहयति—

एगविहाइ दसविहो पसत्थओ चेव अप्पसत्थो य । संजमे विज्जाचरणे[2] नाणादितिगं च तिविहो उ[3] ॥ ६० ॥
नाणं दंसण तव संजमो य[4] वय पंच छच्च[5] जाणेज्जा । पिंडेसण पाणेसण उग्गहपडिमा य पिंडम्मि ॥ ६१ ॥
पवयणमाया नव बंभगुत्तिओ[1] तह य समणधम्मो य[2] । एस पसत्थो पिंडो भणिओ कम्मट्ठमहणेहिं ॥ ६२ ॥
अपसत्थो य असंजमे अन्नाणं अविरई[2] य मिच्छत्तं[3] । कोहाया[4]सव[5]काया[6] कम्मगुत्ती[7][8] अहम्मो य ॥ ६३ ॥

हरियाइअणंतरिया परंपरं पिढरगाइसु वणंमि । पूपाइ पिट्ठणंतर भरए कुउवाइसू इयरा ॥ ५५७ ॥

व्याख्या—'वने' वनस्पतिविषये 'अनन्तरनिक्षिप्तं' हरितादिषु सचित्तव्रीहिकाप्रभृतिषु अनन्तरिता निक्षिप्ता अपूपादय इति शेषः, हरितादीनामेवोपरि स्थितेषु पिठरादिषु निक्षिप्ता अपूपादयः परम्परनिक्षिप्तं, तथा बलीवर्दादीनां पृष्ठेऽनन्तरनिक्षिप्ता अपूपादयस्त्रसेष्वनन्तरनिक्षिप्तं, बलीवर्दादिपृष्ठ एव भरके कुतुपादिषु वा भाजनेषु निक्षिप्ता मोदकादयः परम्परनिक्षिप्तम् । इह सर्वत्रानन्तरनिक्षिप्तं न ग्राह्यं, सचित्तसङ्घट्टनादिदोषसम्भवात्, परम्परनिक्षिप्तं तु सचित्तसङ्घट्टनादिपरिहारेण यतनया ग्राह्यमिति सम्प्रदायः । उक्तं निक्षिप्तद्वारम्, अथ पिहितद्वारमाह—

सच्चित्ते अच्चित्ते मीसग पिहियंमि होइ चउभंगो । आइतिगे पडिसेहो चरिमे भंगंमि भयणा उ ॥ ५५८ ॥

व्याख्या—इह 'सचित्ते' इत्यादौ सप्तमी तृतीयार्थे, ततोऽयमर्थः—सचित्तेनाचित्तेन मिश्रेण वा पिहिते चतुर्भङ्गी भवति, अत्र जातावेकवचनं, तेन तिस्रश्चतुर्भङ्ग्यो भवन्तीति द्रष्टव्यं, तत्रैका सचित्तमिश्रपदाभ्यां, द्वितीया सचित्ताचित्तपदाभ्यां, तृतीया मिश्राचित्तपदाभ्यां, तत्र सचित्तेन सचित्तं पिहितं, मिश्रेण सचित्तं, सचित्तेन मिश्रं, मिश्रेण मिश्रमिति प्रथमा चतुर्भङ्गी, तथा सचित्तेन सचित्तं पिहितम्, अचित्तेन सचित्तं, सचित्तेनाचित्तम्, अचित्तेनाचित्तमिति द्वितीया चतुर्भङ्गी, तथा मिश्रेण मिश्रं पिहितं, मिश्रेणाचित्तम्, अचित्तेन मिश्रम्, अचित्तेनाचित्तमिति तृतीया । तत्र गाथापर्यन्ततुशब्दवचनात् प्रथमचतुर्भङ्ग्यां सर्वेष्वपि भङ्गेषु न कल्पते, द्वितीयतृतीयचतुर्भङ्गिकयोस्तु प्रत्येकमादिमेषु २ त्रिषु भङ्गेषु न कल्पते इत्यर्थः, चरमे तु भङ्गे भजना, सा च 'गुरुगुरुणे' त्यादिना स्वयमेव वक्ष्यति । सम्प्रति चतुर्भङ्गीत्रयविषयावान्तरभङ्गकथनेऽतिदेशमाह—

व्याख्या—प्रशस्तोऽप्रशस्तश्च भावपिण्डः प्रत्येकं ' दशविधः ' दशप्रकारः, किंरुपः ? इत्याह–' एकविधादिकः ' एकविधो द्विविधस्त्रिविधश्चतुर्विधो यावद्दशविध इति, तत्र प्रथमत उद्देशक्रमप्रामाण्यानुसरणात्प्रशस्तं भावपिण्डं दशविधमप्यभिदधाति–'सञ्जमे'त्यादि, तत्रैकविधः प्रशस्तो भावपिण्डः संयमः, इह संयमो ज्ञानदर्शने विना न भवति, ' पूर्वद्वयलाभः पुनरुत्तरलाभे भवति सिद्धः ' इति वचनप्रामाण्यात्, ततो ज्ञानदर्शने संयम एवान्तर्भूते विवक्षिते इति संयम एवैकः प्रशस्तभावपिण्डत्वेन प्रतिपाद्यमानो न विरुध्यते, द्विविधः पिण्डो 'विद्याचरणे' विद्या–ज्ञानं चरणं–क्रिया, अत्र सम्यग्दर्शनं ज्ञान एवान्तर्भूतं विवक्षितमिति न पृथग्गणितं, विवक्षा हि वक्त्रधीना, वक्ता च कदाचित्संक्षेपेणाभिधित्सुस्तां तां प्रत्यासत्तिमधिकृत्य तत्तदन्तर्भावेनाभिधत्ते कदाचित्पुनर्विशेषपरिज्ञानोत्पादनाय विस्तरेणाभिधित्सुः सर्वं वैविक्त्येन पृथक् प्रतिपादयति, ततः कदाचित् ज्ञानादित्रिकं संयम इति प्रतिपाद्यते कदाचित् ज्ञानक्रिये इति कदाचित्पुनः परिपूर्णमपि साक्षाद्यथा ज्ञानादित्रिकमिति न कश्चिद्दोषः, त्रिविधः पिण्डः पुनः ' ज्ञानादित्रिकं ' ज्ञानदर्शनचारित्राणि, चतुर्विधः पिण्डो ज्ञानदर्शनतपःसंयमाः, पञ्चविधः पञ्च व्रतानि–प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहनिवृत्तिलक्षणानि, अत्रापि ज्ञानदर्शने अन्तर्भूते विवक्षिते इति न पृथग्गणिते, रात्रिभोजनविरमणमप्येतेषु पञ्चसु यथायोगमन्तर्भूतं विवक्षितं ततो न पञ्चविधत्वव्याघातः, एवमुत्तरत्रापि यथायोगमन्तर्भावभावना भावनीया, षड्विधो भावपिण्डः–षड् व्रतानि, तत्र पञ्च व्रतानि पूर्वोक्तान्येव प्राणातिपातविरमणादीनि षष्ठं तु रात्रिभोजनविरमणलक्षणं, तथा सप्तविधे पिण्डे–सप्त पिण्डैषणाः सप्त पानैषणाः सप्त अवग्रहप्रतिमाः, तत्र पिण्डैषणाः पानैषणाश्च सप्त संसृष्टादयः, ताश्चेमाः–' संसट्ठम-

१ अवग्रहप्रतिमाः सप्त, अवगृह्यते इत्यवग्रहस्तस्य प्रतिमा अभिग्रहाः, तत्र पूर्वमेवैवंभूतः प्रतिश्रयो मया ग्राह्यो नान्यथाभूत इति विचिन्त्य तमेव याचित्वा गृह्णतः प्रथमा १ । तथा यस्यैवभूतोऽभिग्रहो भवति–अहं खल्वन्येषा कृतेऽवग्रहं ग्रहीष्यामि, अन्यैश्च गृहीतेऽवग्रहे वत्स्यामीति द्विती-

पीडा भवति, तथा लुब्धोऽयं न परपीडां गणयतीति निन्दा, तथा तद्भाजनं कदाचिदुष्णभक्तादिभृतं स्यात्ततस्तस्योत्पाटने कथमपि तस्य 'वधे' विनाशे दात्र्याः साधोर्वा दाहः स्यात्, तथा मुण्डस्य भिक्षादानायोत्पाटितमिदं भग्नमित्येवं खेदवशतः कदाचिदप्रीतिरुपजायते, ततस्तद्द्रव्यान्यद्रव्यव्यवच्छेदः, तथा महति भाजने भग्ने तन्मध्यस्थिते भक्तादौ सर्वतो विसर्पति भूम्यादिस्थितपृथिवीकायादिजन्तुविनाशः। यत एवमेते दोषाः ततः स्तोके बहुकं बहुके बहुकमिति द्वौ भङ्गौ सर्वत्रापि न कल्पेते । एतदेवाह—

थोवे थोवं छूढं सुक्के उल्लं तु तं तु आइन्नं । बहुयं तु अणाइन्नं कडदोसो सोत्ति काऊणं ॥ ५७१ ॥

व्याख्या—स्तोके स्तोकम्, उपलक्षणमेतत्, बहुके वा स्तोकं यन्निक्षिप्तं तदपि शुष्के शुष्कं कल्पत एव, ततः शुष्के आर्द्रे, तु-शब्दादार्द्रे शुष्कमार्द्रे आर्द्रं च तद्भवति आचीर्णं कल्पते इति भावः, यत्तु बहुकं स्तोके बहुके बहुकं वा संह्रियते तदनाचीर्णं, कुतः? इत्याह—स बहुकसंहारः कृतदोषः—अनन्तरगाथायामुक्तदोष इतिकृत्वा । उक्तं संहृतद्वारम्, अथ दायकद्वारं गाथाषट्केनाह—

बाले[1] वुड्ढे[2] मत्ते[3] उम्मत्ते[4] वेविरे[5] य जरिए[6] य । अंधिल्लए[7] [य] पगलिए आरूढे पाउयाहिं च ॥ ५७२ ॥

हत्थिंदु[10]नियल[11]बद्धे विवज्जिए[12] चेव हत्थपाएहिं । तेरासि[13] गुव्विणी[14] बालवच्छ[15] भुंजंति[16] घुसुलिंती[17] ॥ ५७३ ॥

भज्जंती[18] य दलंती[19] [20]कंडंती चेव तह य पीसंती[21] । पींजंती[22] रुंचंती[23] कत्तंति[24] पमद्दमाणी[25] य ॥ ५७४ ॥

छक्कायवग्गहत्था[26] समणट्ठा[27] निक्खिवित्तु ते चेव । ते चेवोगाहंती[28] संघट्टंती[29]रभंती[30] य ॥ ५७५ ॥

लोणं दग अगणि वत्थी फलाइ मच्छाइ सजिय हत्थंमि । पाएणोगाहणया संघट्टण सेसकाएणं ॥ ५८९ ॥

खणमाणी आरभए मज्जइ धोयइ व सिंचए किंचि । छेयविसारणमाई छिंदइ छट्टे फुरुफुरुंते ॥ ५९० ॥

व्याख्या—इह सा षट्कायव्यग्रहस्ता उच्यते यस्या हस्ते सजीवं लवणमुदकमग्निर्वायुपूरितो वा बस्तिर्फलादिकं बीजपूरादिकं मत्स्यादयो वा विद्यन्ते, ततः सा यद्येतेषां सजीवलवणादीनामन्यतमदपि श्रमणभिक्षादानार्थं भूम्यादौ निक्षिपति तर्हि न कल्पते । तथाऽवगाहना नाम यदेतेषां षण्णां जीवनिकायानां पादेन सङ्घट्टनं, शेषकायेन हस्तादिना सम्मर्दनं सङ्घट्टनम्, आरभमाणा कुश्यादिना भूम्यादि खनन्ती, अनेन पृथिवीकायारम्भ उक्तः, यद्वा 'मज्जंती' शुद्धेन जलेन स्नान्ती, अथवा 'धावंती' शुद्धेनोदकेन वस्त्राणि प्रक्षालयन्ती, यदिवा किञ्चिद् वृक्षवल्ल्यादि सिञ्चन्ती, एतेनाप्कायारम्भो दर्शितः, उपलक्षणमेतत्, ज्वलयन्ती वा फूत्कारेण वैश्वानरं बस्त्यादिकं वा सचित्तवायुभृतमितस्ततः प्रक्षिपन्ती, एतेनाग्निवायुसमारम्भ उक्तः, तथा शाकादेश्छेदविशारणे कुर्वती, तत्र छेदः—पुष्पफलादेः खण्डनं विशारणं-तेषामेव खण्डानां शोषणायातपे मोचनम्, आदिशब्दात्तण्डुलमुद्गादीनां शोधनादिपरिग्रहः, तथा छिन्दती षष्ठान् त्रसकायान् मत्स्यादीन् 'फुरुफुरुंते' इति पोस्फूर्यमाणान् पीडयोद्वेल्लत इत्यर्थः, अनेन त्रसकायारम्भ उक्तः । इत्थं षड्जीवनिकायानारभमाणाया हस्तान्न कल्पते । सम्प्रति षट्कायव्यग्रहस्तेति पदस्य व्याख्याने मतान्तरमुपदर्शयति—

छक्कायवग्गहत्था केई कोलाइकन्नलइयाई । सिद्धत्थगपुप्फाणि य सिरंमि दिन्नाइं वज्जंति ॥ ५९१ ॥

व्याख्या—केचिदाचार्याः षट्कायव्यग्रहस्तेतिवचनतः 'कोलादीनि' बदरादीनि, आदिशब्दात्करीरादिपरिग्रहः, 'कन्नलइयाइं'ति

व्याख्या—इदं शाल्योदनादिकमुद्धारितं देहि मा 'शेषं' कोद्रवकूरादि, अनेन द्रव्यच्छिन्नमुक्तं, तदपि च शाल्योदनादिकमन्तर्व्यवस्थितं वहिर्व्यवस्थितं वा एकतरं न शेषम्, अनेन क्षेत्रच्छिन्नमुक्तं, तथाऽमुकस्या वेलाया आरभ्य यावदमुका वेला, यथा प्रहरादारभ्य यावत्प्रहरद्वयं तावद्देहि, अनेन कालच्छिन्नमुक्तं, भावच्छिन्नं तु स्वयमभ्यूह्यं, तच्चैवं—यावत्तव रोचते तावद्देहि मा स्वरुचिमतिक्रम्यापि।

सम्प्रत्युद्दिष्टमधिकृत्य कल्प्याकल्प्यविधिमाह—

दव्वाईछिन्नंपि हु जइ भणई आरओऽवि मा देह। नो कप्पइ छिन्नंपि हु अच्छिन्नकडं परिहरंति ॥ २३४ ॥

व्याख्या—इह यद् द्रव्यक्षेत्रादिभिः पृथग्निर्धारितं तदतिरिच्य शेषं समस्तमपि कल्पते, तस्य दानार्थं सङ्कल्पितत्वाभावात्, केवलं द्रव्यादिच्छिन्नमपि—द्रव्यक्षेत्रादिभिः पृथग्निर्धारितमपि 'हुः' निश्चितं यदि गृहस्वामी आरत एव—देयस्य वस्तुनो नियतादवधेरर्वागपि भणति, यथा मा इत ऊर्ध्वं कस्मायपि देहीति, यथा प्रहरद्वयं यावत्पूर्वं किञ्चिद्दातुं निरोपितं, ततो दानपरिणामाभावादर्वागेव निषेधति—'मा इत ऊर्ध्वं दद्या'दिति तदा तच्छिन्नमपि कल्पते, तस्य सम्प्रत्यात्मीयसत्ताकीकृतत्वात्, यत्पुनरच्छिन्नकृतमच्छिन्नम्—अनिर्द्धारितं कृतं वर्त्तते तत्परिहरन्ति, अकल्प्यत्वात्, इत्थमेव भगवदाज्ञाविजृम्भणात्, यदा त्वच्छिन्नमपि पश्चाद्दानपरिणामाभावादर्वागेवात्मार्थीकृतं

भवति तदा तत्कल्पते। सम्प्रति सम्प्रदानविभागमधिकृत्य कल्प्याकल्प्यविधिमाह—

अमुगाणंति व दिज्जउ अमुकाणं मित्ति एत्थ उ विभासा। जत्थ जईण विसिट्ठो निद्देसो तं परिहरंति ॥ २३५ ॥

व्याख्या—अमुकेभ्यो दद्यात् माऽमुकेभ्य इत्येवं सम्प्रदानविशेषविषये सङ्कल्पे कृते विभाषा द्रष्टव्या, कदाचित्कल्पते कदाचिन्न,

तत्र यदा कल्पते यदा च न तदाह—'जत्थे'त्यादि, यत्र देये वस्तुनि यतीनामप्यविशेषेण निर्देशो भवति, यथा ये केचन गृहस्था अगृहस्था वा भिक्षाचरा यदिवा ये केचित्पाखण्डिनो यद्वा ये केचन श्रमणास्तेभ्यो दातव्यमिति तत्परिहरन्ति, यत्र तु यतीनामेव विशेषेण निर्देशो यथा यतिभ्यो दातव्यमिति तत्परिहरन्त्येव नात्र कश्चित्सन्देह इति तत्पृथग्विशेषेण नोक्तं, यदि पुनर्गृहस्थेभ्य एव दीयतां, यदिवा चरकादिभ्य एव पाखण्डिभ्यो न शेषेभ्यस्तदा कल्पते, अपि च—

संदिस्संतं जो सुणइ कप्पए तस्स सेसए ठवणा । संकलिय साहणं वा करेंति असुए इमा मेरा ॥ २३६ ॥

व्याख्या—यन्नाद्याप्यौद्देशिकं जातं वर्त्तते केवलं तदानीमेवोदिश्यमानं वर्त्तते, यथा इदं देहि मा शेषमित्यादि, तत्सन्दिश्यमानम् अर्थिभ्यो दानाय वचनेन सङ्कल्प्यमानं यः साधुः शृणोति तस्य तत्कल्पते तदैव, दोषाभावात्, तदपि च उद्दिष्टौद्देशिकादि द्रष्टव्यं, न कृतं कर्म च, यत उक्तं मूलटीकायाम्—"अत्र चायं विधिः—संदिस्संतं जो सुणइ साहू उद्देसुद्देसयं पडुच्च, न य कडकम्माइं, तं कप्पए तदैव दोषाभावा"दिति । यस्तु सन्दिश्यमानं न शृणोति तस्य न कल्पते, कुतः? इत्याह—'ठवण'त्ति स्थापनादोषात्, स च निर्गतः सन्नन्येभ्यः साधुभ्यो निवेदयति, तथा चाह—'सङ्कलिए'त्यादि 'अश्रुते' शेषसाधुभिरनाकर्णिते इयं पूर्वपुरुषाचीर्णा मर्यादा, यदुत सङ्कलिकया एकः सङ्घाटकोऽन्यस्मै कथयति सोऽप्यन्यस्मायित्येवंरूपया 'साहणं' कथनं करोति, वाशब्दो यदि साधवो बहुप्रमाणास्तदैकस्यानस्थानमिति सूचनार्थः, स सर्वेभ्यो निवेदयति, यथा माऽस्मिन् गृहे व्राजिषुः, अनेषणा वर्त्तत इति । एवमपि यैः सङ्घाटकैः कथमपि न ज्ञातं भवति तेषां परिज्ञानोपायमाह—

मा एयं देहि इमं पुट्ठे सिट्ठंमि तं परिहरंति । जं दिन्नं तं दिन्नं मा संपइ देहि गेण्हंति ॥ २३७ ॥

एमेव य कम्मंमिऽवि उण्हवणे नवरि तत्थ नाणत्तं। ताविवविलीणएणं मोयगचुन्नीपुणक्करणं ॥ २४० ॥

व्याख्या—यथा कृतस्य सम्भवः स्वरूपं चोक्तम् एवं कर्म्मण्यपि द्रष्टव्यं, नवरं तत्र कर्म्मणि 'उष्णापने' उष्णीकरणे 'नानात्वं' विशेषः, तथाहि—'तापितविलीनेन' तापितेन विलीनेन च गुडादिना मोदकचूर्ण्याः पुनर्मोदकत्वेन करणं नान्यथा, तथा तुवर्यादि-भक्तमपि रात्र्युषितं द्वितीयदिने भूयः संस्कारापादनेन कर्मतया निष्पाद्यमानं नाग्निमन्तरेण निष्पाद्यते ततोऽवश्यं कर्म्मण्युष्णापने नानात्वम्। सम्प्रत्यत्रैव कल्प्याकल्प्यविधिमाह—

अमुगंति पुणो रद्धं दाहमकप्पं तमारओ कप्पं। खेत्ते अंतो बाहिं काले सुइव्वं परेव्वं वा ॥ २४१ ॥

व्याख्या—भिक्षार्थं प्रविष्टं साधुं प्रति यदि गृहस्थो भणति-यथाऽन्यस्मिन् गृहे विहृत्य व्यावर्त्तमानेन त्वया भूयोऽपि मद्गृहे समागन्तव्यं, यतोऽहम् 'अमुकं' मोदकचूर्ण्यादि भूयोऽपि राद्धं गुडपाकादिदानेन मोदकादि कृत्वा दास्यामि, एवमुक्ते तथाकृत्वा चेद्दाति तर्हि तन्न कल्पते, कर्म्मौद्देशिकत्वात्, 'आरात्' भूयः पाकारम्भादर्वाक् पुनः कल्प्यं, दोषाभावात्, तथा क्षेत्रेऽन्तर्बहिर्वा काले श्वस्तनं परतरदिनभवं वाऽकल्प्यमारतः कल्प्यम्, इयमत्र भावना-यद् गृहस्यान्तर्बहिर्वा मोदकचूर्ण्यादिकं मोदकादितयोपस्करिष्यामि कालविवक्षायां यदद्य श्वः परतरे वा दिने भूयोऽपि पक्ष्यामि तत्तुभ्यं दास्यामीत्युक्ते तथैव चेत्कृत्वा ददाति ततो न कल्पते, भूयोऽपि पाकाद्, आरतस्त्वसंसक्तं कल्पते। तथा चाह—

जं जह व कयं दाहं तं कप्पइ आरओ तहा अकयं। कयपाकमणिट्ठत्ति ठियंपि जावत्तियं मोत्तुं ॥२४२॥

व्याख्या—इह यत् पूर्वं स्वरूपतो 'गन्धादिगुणविशिष्टं' सुरभिगन्धादिगुणविशिष्टमपि, अपिरत्र सामर्थ्याद्गम्यते, पश्चादशुचिगन्धद्रव्ययुक्तं सत् पूतिरिति परिह्रियते तद्द्रव्यं जानीहि द्रव्यपूतिरिति । अत्रार्थे गाथाद्वयेनोदाहरणमाह—

गोट्ठिनिउत्तो धम्मी सहाएँ आसन्नगोट्ठिभत्ताए । समियसुरवल्लमीसं अजिन्न सन्ना महिसिपोहो ॥ २४५ ॥
संजायलित्तभत्ते गोट्ठिगगंधोत्ति वल्लवणिआयो । उक्खणिय अन्न छगणेण लिंपणं दव्वपूई उ ॥ २४६ ॥

व्याख्या—समिल्लं नाम पुरं, तत्र बहिरुद्याने सभाकलितदेवकुलिकायां माणिभद्रो नाम यक्षः, अन्यदा च तस्मिन् पुरे शीतलकाभिधमशिवमुपतस्थे, ततः कैश्चित्तस्य यक्षस्यौपयाचितकमिष्टं यद्यस्मादशिवाद्वयं निस्तरामस्ततस्तवैकं वर्षमष्टम्यादिपूद्यापनिकां करिष्यामः, ततो निस्तीर्णाः कथमपि तस्मादशिवात्, जातश्च तेषां चेतसि चमत्कारो यथा नूनमयं सप्रातिहार्यो यक्ष इति, ततो देवशर्माभिधो भाटकप्रदानेन पूजाकारको बभणे, यथा वर्षमेकं यावदष्टम्यादिषु प्रातरेव यक्षसभां गोमयेनोपलिम्पेः, येन तत्र पवित्रीभूतायां वयमागत्योद्यापनिकां कुर्मः, तथैव तेन प्रतिपन्नं, ततः कदाचिदद्योद्यापनिका भविष्यतीतिकृत्वा सभोपलेपनार्थमनुद्गत एव सूर्ये कस्यापि कुटुम्बिनो गोपाटके छगणग्रहणाय प्रविवेश, तत्र च केनापि कर्मकरेण रात्रौ मण्डकवल्लसुराद्यभ्यवहारतो जाताजीर्णेन पश्चिमरात्रीभागे तस्मिन्नेव गोपाटके क्वचित्प्रदेशे दुर्गन्धमजीर्णं पुरीषं व्युदसर्जि तस्य चोपरि कथमपि महिषी समागत्य छगणपोहं मुक्तवती, ततस्तेन स्थगितं तदजीर्णं पुरीषं देवशर्मणा न ज्ञातमिति देवशर्मा तं छगणपोहं सकलमपि तथैव गृहीत्वा तेन सभामुपलिप्तवान्, उद्यापनिकाकारिणश्च जना नानाविधमोदनादिकं भोजनमानीय यावद् भोजनार्थं तत्रोपविशन्ति तावत्तेषामतीव दुरभिगन्धः समायातः, ततः पृष्टो देवशर्मा, यथा कुतोऽयमशुचिगन्धः समायाति? इति, तेनोक्तं—न जाने, ततस्तैः सम्यक् परिभावयद्भिरुपलेपनामध्ये वल्लाद्यवयवा ददृशिरे सुरागन्धश्च निर्ज्ञातः,

व्याख्या—'भावे' भावविषया पूतिर्द्विधा, तद्यथा—बादरा सूक्ष्मा च, सूत्रे च नपुंसकनिर्देशः प्राकृतत्वात्, तत्र सूक्ष्मां भावपूतिमुपरि वक्ष्ये, बादरा पुनर्द्विधा, तद्यथा 'उपकरणे' उपकरणविषया 'भक्तपाने' भक्तपानविषया, तत्र भक्तपानपूतिं सामान्यतो व्याचिख्यासुराह—

चुल्लुक्खलिया डोए दव्वीछूढे य मीसगं पूइं । डाए लोणे हिंगू संकामण फोडणे धूमे ॥ २५० ॥

व्याख्या—'चुल्ली' प्रतीता, 'उखा' स्थाली 'डोयः' बृहद्दारुहस्तकः, महांश्चटुक इत्यर्थः, 'दर्व्वी' लघीयान् दारुहस्तकः, एतानि च सर्वाण्याधाकर्म्मादिरूपाणि द्रष्टव्यानि, सर्वत्रापि च तृतीयार्थे सप्तमी, ततोऽयमर्थः—एतैः सम्मिश्रं शुद्धमपि यदशनादि तत् पूतिः, तत्र चुल्ल्युखाभ्यां मिश्रिताभ्यां कृत्वा रन्धनेन यद्वा तत्र स्थापनेन, तथा 'डायं' शाकं लवणं हिङ्गु च प्रतीतम्, एतैराधाकर्मिकैः सम्मिश्रं पूतिः, तथा 'संक्रामणस्फोटनधूमैः' इति, तत्र संक्रामणम्—आधाकर्म्मभक्तादिखरण्टिते स्थाल्यादौ शुद्धस्याशनादेः पचनं मोचनं वा, यद्वा दारुहस्तेनाधाकर्म्मणाऽन्यत्र स्थाल्यां सञ्चारणं, स्फोटनम्—आधाकर्म्मणा राजिकादिना संस्कारकरणं धूमः—हिङ्ग्वादिसत्को वघारः ॥ एनामेव गाथां व्याचिख्यासुः प्रथमत उपकरणशब्दं व्याख्यानयति—

सिज्झंतस्सुवयारं दिज्जंतस्स व करेइ जं दव्वं । तं उवकरणं चुल्ली उक्खा दव्वी य डोयाई ॥ २५१ ॥

व्याख्या—यच्चुल्ल्यादिकं सिद्ध्यतोऽन्नस्य, यद्वा यद्दर्व्यादिकं दीयमानस्य भक्तस्योपकारं करोति तच्चुल्ल्यादिकं दर्व्यादिकं च 'उपकरणम्' इत्युच्यते, उपक्रियते अनेनेत्युपकरणमितिव्युत्पत्तेः । तत्र चुल्ल्युखयोः स्थितमशनादिकमाश्रित्य कल्प्याकल्प्यविधिमाह—

चुल्लुक्खा कम्माई आइमभंगेसु तीसुवि अकप्पं । पडिकुट्ठं तत्थत्थं अन्नत्थगयं अणुन्नायं ॥ २५२ ॥

व्याख्या—इह चुल्ल्युखे कदाचिद् द्वे अप्याधाकर्म्मिके आधाकर्मिककर्दमसम्मिश्रे वा भवेतां, कदाचिदेकतरा काचित्, तत्र च भङ्गाश्चत्वारः, तद्यथा—चुल्ली आधाकर्मिकी उखा च १ चुल्ली आधाकर्मिकी नोखा २ उखा आधाकर्मिकी न चुल्ली ३ नोखा आधाकर्मिकी नापि चुल्ली ४ । तत्रादिमेषु त्रिष्वपि भङ्गेषु रन्धनेनावस्थानमात्रेण वा स्थितमकल्प्यं पूतिदोषात् । अकल्प्यस्यापि तस्य विषयविभागेन कल्प्यतामकल्प्यतां चाह—'तत्र' चुल्ल्यादौ रन्धनेनान्यतो वाऽऽनीय स्थापनेन स्थितं सत् 'प्रतिक्रुष्टं' निराकृतम्, अन्यत्र गतं पुनस्तदेवानुज्ञातं तीर्थकरादिभिः, इयमत्र भावना-यदि तत्र राद्धमथवाऽन्यतः समानीय स्थापितं ततो यदि तदेवान्यत्र स्वयोगेन नीतं भवति न साध्वर्थं तर्हि कल्पते । तदेवं चुल्ल्युखास्थितस्य कल्प्याकल्प्यविधिमुपदर्श्य सम्प्रति चुल्ल्याद्युपकरणानां पूतिभावं दिदर्शयिषुः 'चुल्लुक्खलिया डोए' इति पूर्वोक्तगाथावयवं व्याख्यानयति—

कम्मियकद्दममिस्सा चुल्ली उक्खा य फड्डुगजुया उ । उवगरणपूइमेयं डोए दंडे व एगयरे ॥ २५३ ॥

व्याख्या—आधाकर्म्मिकेन कर्दमेन या मिश्रा, किमुक्तं भवति ?—कियता शुद्धेन कियता चाधाकर्मिकेण या निष्पादिता चुल्ली उखा च सा आधाकर्मिककर्दममिश्रा, कथम् ? इति, आह—'फड्डुगजुया उ' त्ति, अत्र हेतौ प्रथमा ततोऽयमर्थः-यतः फड्डुगेन—आधाकर्मिकेन कर्दमसूचकेन युता तत आधाकर्मिककर्दममिश्रा, सा इत्थंभूता उपकरणपूतिः, तथा 'डोए' इति देशे समुदायशब्दोपचारात् डोय इत्युक्ते डोयस्याग्रभागो गृह्यते, तस्मिन् यद्वा दण्डे एकतरस्मिन्नाधाकर्माणि स दारुहस्तकः पूतिर्भवति, एवमनया दिशा अन्यस्याप्युपकर-

णस्य पूतित्वं भावनीयं, तत्र चुल्ह्युखाविषये कल्प्याकल्प्यविधिरनन्तरमेवोक्तो दारुहस्तके चाधाकर्मणि पूतिरूपे वा स्वयोगेन स्थाल्या बहिष्कृते स्थाल्यां स्थितमशनादि कल्पते, न तु तेन सम्मिश्रमिति। सम्प्रति 'दव्वी छूढे य' इति व्याचिख्यासुराह—

दव्वीछूढेत्ति जं वुत्तं, कम्मदव्वीएँ जं दए। कम्मं घट्टिय सुद्धं तु, घट्टए हारपूइयं ॥ २५४ ॥

व्याख्या—'दव्वी छूढे' इति यत् प्रागुक्तं, तस्यायमर्थः—'कर्म्मदर्व्या' आधाकर्म्मिकदर्व्या यत् शुद्धमप्यशनादिकं घट्टयित्वा ददाति तद् 'आहारपूतिः' भक्तपूतिः। सा चेद्दर्वी स्थाल्याः सकाशान्निष्काशिता तर्हि स्थाल्याः सत्कं कल्पते, यद्वा मा भूदाधाकर्म्मिकी दर्वी, केवलं शुद्धयाऽपि दर्व्या यदि पूर्वमाधाकर्मिकं 'घट्टयित्वा' चालयित्वा पश्चादाधाकर्मावयवखरण्टितया यदपरं शुद्धमपि भक्तादिकं घट्टयति घट्टयित्वा च ददाति तदप्याहारपूतिः। अस्यां च दर्व्यां स्थाल्या निष्काशितायामपि पाश्चात्यं स्थालीभक्तं न कल्पते, आधाकर्म्मावयवमिश्रितत्वात्। 'डाए' इत्याद्युत्तरार्द्धं व्याचिख्यासुराह—

अत्तट्ठिय आयाणे डायं लोणं च कम्म हिंगुं वा। तं भत्तपाणपूई फोडण अन्नं व जं छुहइ ॥ २५५ ॥

संकामेउं कम्मं सिद्धं जं किंचि तत्थ छूढं वा। अंगारधूमि थाली वेसण हेट्ठा मुणीहि धूमो ॥ २५६ ॥

व्याख्या—आत्मार्थम् 'आदाने' तक्रादिपाकारम्भकरणरूपे सति यदाधाकर्मिकं 'डायं' शाकं यदिवा लवणं यद्वा हिङ्गुः अन्यद्वा स्फोटनं राजिकाजीरकादि तत् तक्रादिकं तेन सम्मिश्रं भक्तपानपूतिः, एतेन 'डाए लोणे हिंगू फोडणं' इति व्याख्यातं। तथा यस्यां स्थाल्यां राद्धमाधाकर्म्म तदन्यत्र संक्रमय्य—प्रतिक्षिप्य तस्यामेव स्थाल्यामकृतकल्पत्रयायां यदात्मार्थं सिद्धं किञ्चित् यद्वा तत्र प्रक्षिप्तं तदपि भक्तपान-

पूतिः, अनेन 'संकमणं'ति व्याख्यातं, तथा 'अङ्गारेषु' निर्द्धूमाग्निरूपेषु 'वेसने' वेसनग्रहणमुपलक्षणं तेन वेसनहिङ्गुजीरकादौ प्रक्षिप्ते सति यो धूम उच्छलति स वेसनाङ्गारधूम इति ज्ञातव्यं, पूर्वगाथायां धूम इत्यस्य पदस्यायमर्थो भावनीय इत्यर्थः। वेसनशब्दस्य च व्यस्तः सम्बन्ध आर्षत्वात्, अङ्गारादीनां च मध्ये एकं द्वे त्रीणि वाऽऽधाकर्मिकाणि द्रष्टव्यानि, अनेन च धूमेन या व्याप्ता स्थाली तक्रादिकं वा तदपि पूतिः ॥ उक्ता बादरपूतिः, अथ सूक्ष्मपूतिमाह—

इंधणधूमेगंधेअवयवमाईहिं सुहमपूई उ। सुंदरमेयं पूई चोयग भाणिए गुरू भणइ ॥ २५७ ॥

व्याख्या—अत्रैकारद्वयस्य छन्दोऽर्थत्वादादिशब्दस्य व्यत्ययान्मकारस्य चालाक्षणिकत्वादेवं निर्देशो द्रष्टव्यः—'इन्धनधूमगन्धाद्यवयवैः' इति, इन्धनग्रहणं चोपलक्षणं, ततोऽङ्गारा अपि गृह्यन्ते, आदिशब्देन च बाष्पपरिग्रहः, ततोऽयमर्थः—इन्धनाङ्गारावयवधूमगन्धबाष्पैराधाकर्म्मसम्बन्धिभिः सम्मिश्रं यत् शुद्धमशनादिकं तत् सूक्ष्मपूतिः। एषा च किल सूक्ष्मपूतिर्न आगमे निषिध्यते, ततश्चोदक आह—'सुन्दरं' युक्तमेनां पूतिं वर्जयितुं, तत्किं नागमे निषिध्यते?, एवं परेणोक्ते गुरुर्भणति—

इंधनधूमेगंधेअवयवमाई न पूइयं होइ। जेसिं तु एस पूई सोही नवि विज्जए तेसिं ॥ २५८ ॥

व्याख्या—अत्रापि पदयोजना प्रागिव, ततोऽयमर्थः—इन्धनाङ्गारावयवधूमगन्धबाष्पैराधाकर्म्मसम्बन्धिभिर्मिश्रं पूतिर्न भवति, येषां तु मतेन पूतिर्भवति तेषां मतेन साधोः शुद्धिः सर्वथा न विद्यते। एतदेव भावयति—

इंधनअगणीअवयव धूमो बप्फो य अन्नगंधो य। सव्वं फुसंति लोयं भन्नइ सव्वं तओ पूई ॥ २५९ ॥

व्याख्या—इन्धनाग्न्यवयवाः सूक्ष्मा ये धूमेन सहादृश्यमाना गच्छन्ति, तथा धूमो वाष्पोऽन्नगन्धश्च, एते सर्वेऽपि प्रसरन्तः किल सकलमपि लोकं स्पृशन्ति, तत्पुद्गलानां सकलमपि लोकं यावद्गमनसम्भवात्, ततस्तवाभिप्रायेण सर्वमपि पूतिरापद्यते, तथा च सति साधोः कथं शुद्धिः ? इति । अत्र परः प्रागुक्तविरोधं दर्शयन् स्वपक्षं समर्थयति—

नणु सुहूमपूइयस्सा पुव्वुदिट्ठस्सऽसंभवो एवं । इंधणधूमाईहिं तम्हा पूइत्ति सिद्धमिणं ॥ २६० ॥

व्याख्या—ननु यदीन्धनाग्न्यवयवादिभिः पूतिर्न भवेत्, एवं सति तर्हि पूर्वोद्दिष्टस्य 'भावंमि उ वायरं सुहुमं' इत्येवमुक्तस्य सूक्ष्मपूतेरसम्भवः प्राप्नोति, अन्यस्य सूक्ष्मपूतेरभावात्, तस्मात्सिद्धमिदं यदुत इन्धनधूमादिभिः सम्मिश्रं पूतिः सूक्ष्मपूतिरिति । अत्र गुरुराह-

चोयग इंधणमाईहिं चउहिवी सुहुमपूइयं होइ । पन्नवणामित्तमियं परिहरणा नत्थि एयस्स ॥ २६१ ॥

व्याख्या—'हे चोदक!' प्रेरक! 'इन्धनादिभिः' इन्धनाग्न्यवयवधूमवाष्पगन्धैश्चतुर्भिरपि स्पृष्टं सूक्ष्मपूतिर्भवति, नात्र कश्चिद्विवादः, एनामेव च सूक्ष्मपूतिमधिकृत्य प्रागुक्तं 'भावंमि उ वायरं सुहुमं' इति, केवलमिदं सूक्ष्मपूतित्वेन भणनं प्रज्ञापनामात्रं, परिहरणं पुनस्तस्याः—सूक्ष्मपूतेर्नास्ति, अशक्यत्वात् ॥ एतदेव प्रपञ्चयति—

सज्झमसज्झं कज्जं सज्झं साहिज्जए न उ असज्झं । जो उ असज्झं साहइ किलिस्सइ न तं च साहेई ॥२६२॥

व्याख्या—इह द्विविधं कार्यं–साध्यमसाध्यं च शक्यमशक्यं चेत्यर्थः, तत्र साध्यं साध्यते न त्वसाध्यं, यस्त्वसाध्यं युष्मादृशः साधयति स नियमात् क्लिश्यते, न च तत्कार्यं साधयति, अविद्यमानोपायत्वात्, एषोऽपि चानन्तरोक्तः सूक्ष्मपूतिरशक्यपरिहारः, ततो न परिह्रियते । सम्प्रति परो 'वायरं सुहुमं'ति समर्थयमानोऽपरं सूक्ष्मपूतिं तस्य परिहरणं च शक्यं प्रतिपादयति—

वात्, ततो यदा तदा वा क्वाप्याधाकर्मसम्भवे सर्वेपामपि साधूनामशुद्धिः प्राप्नोतीति, नैप दोपो, गन्धादिपुद्गलानां चरणभ्रंशापादनसामर्थ्यायोगात्, न चैतदनुपपन्नं, लोकेऽपि तथा दर्शनात्, तथाहि—

लोएवि असुइगंधा विपरिणया दूरओ न दूसंति। नय मारंति परिणया दूरगयाओ(अवि) विसावयवा ॥ २६५ ॥

व्याख्या—लोकेऽपि 'अशुचिगन्धाः' अशुचिसत्का गन्धपुद्गला दूरत आगता विपरिणताः सन्तः स्पृष्टा अपि 'न दुष्यन्ति' न स्पृष्टिदोषमशुचिस्पर्शनरूपं लोकप्रसिद्धं जनयन्ति, न च विषावयवा अपि दूरगताः सन्तः 'परिणताः' पर्यायान्तरमापन्ना मारयन्ति, तथेहाप्याधाकर्मणः सम्बन्धिनो गन्धादिपुद्गला दूरतः समागच्छन्तो विपरिणता न चरणप्राणान् विनाशयितुमीशाः, नाप्याधाकर्मसंस्पर्शलक्षणं दोषं जनयन्तीति। तदेवमिन्धनाद्यवयवापेक्षया यः सूक्ष्मपूतिस्तमपरिहार्यं प्रतिपाद्य सम्प्रति शेषद्रव्यपूतिं परिहार्यं प्रतिपादयति—

सेसेहि उ दव्वेहिं जावइयं फुसइ तत्तियं पूई। लेवेहिँ तिहि उ पूई कप्पइ कप्पे कए तिगुणे ॥ २६६ ॥

व्याख्या—'शेषैः' इन्धनाद्यवयवव्यतिरिक्तैः शाकलवणादिभिर्यावत्स्थाल्यादिपरिमितं द्रव्यं स्पृष्टं भवति तावत्प्रमाणं पूतिः, तथा त्रिभिर्लेपैः पूतिः, इयमत्र भावना—स्थाल्यां किलाधाकर्म राद्धं, ततस्तस्या अपनीतम्, अपनीते च तस्मिन् या पाश्चात्या खरण्टिः सा एको लेपः, ततस्तस्यामेव स्थाल्यामकृतकल्पत्रयायां शुद्धं राद्धं पूतिः, एवं वारद्वयमन्यदपि राद्धं पूतिः, चतुर्थे तु वारे राद्धं न पूतिः, अथात्मयोगेन यदि गृहस्थाः तस्याः स्थाल्याः निःशेषावयवापगमाय कल्पत्रयं ददाति तर्हि का वार्त्ता ?, तत आह—कल्पते तस्यां स्थाल्यां शुद्धमशनादि राद्धं, यदि 'कल्पे' प्रक्षालने 'त्रिगुणे' त्रिसङ्ख्ये कृते सति राध्यति, न शेषकालम्। एतदेव भावयति—

इंधणमाइं मोत्तुं चउरो सेसाणि होंति दव्वाइं । तेसिं पुण परिमाणं तयप्पमाणाउ आरब्भ ॥ २६७ ॥

व्याख्या—इन्धनावयवादीनि चत्वारि पूर्वोक्तानि मुक्त्वा शेषाणि 'द्रव्याणि' अशनादीनि पूतिकरणप्रवणानि ज्ञातव्यानि, तेषां च शुद्धाशनादिपूतिकरणविषये परिमाणं त्वक्प्रमाणादारभ्य द्रष्टव्यम्, इयमत्र भावना—तण्डुलादीनामाधाकर्मणां गन्धादिचतुष्टयं परिहृत्य शेषं त्वगवयवमात्रमप्यादौ कृत्वा यद्वर्त्तते तेन स्पृष्टं शुद्धमप्यशनादि पूतिर्भवतीति । सम्प्रति दातृगृहं साधुपात्रं चाश्रित्य पूतिविषयं कल्प्याकल्प्यविधिमाह—

पढमदिवसंमि कम्मं तिन्नि उ दिवसाणि पूइयं होइ । पूईसु तिसु न कप्पइ कप्पइ तइओ जया कप्पो ॥ २६८ ॥

व्याख्या—इह यस्मिन् दिने यत्र गृहे कृतमाधाकर्म तत्र तस्मिन् दिने 'कर्म' आधाकर्म व्यक्तमेतत्, शेषाणि तु त्रीणि दिनानि पूतिर्भवति, तद्गृहं पूतिदोषवद्भवतीत्यर्थः, तत्र च 'पूतिषु' पूतिदोषवत्सु त्रिषु दिनेषु आधाकर्मदिने च सर्वसङ्ख्यया चत्वारि दिनानि यावन्न कल्पते, साधुपात्रे च पूतिभूते तदा शुद्धमशनादि ग्रहीतुं कल्पते यदा तृतीयः कल्पो दत्तो भवति, न शेषकालं, पूतिदोषसम्भवात् । सम्प्रत्याधाकर्म पूतिं च वैविक्त्येन प्रतिपादयन्नुपसंहरति—

समणकडाहाकम्मं समणाणं जं कडेण मीसं तु । आहार उवहि वसही सव्वं तं पूइयं होइ ॥ २६९ ॥

व्याख्या—श्रमणानामर्थाय कृतमाहारोपधिवसत्यादिकं यत् तत्सर्वमाधाकर्म, यत्पुनः श्रमणानामर्थाय कृतेनाधाकर्मणा मिश्रमाहारादि तत्सर्वं पूतिर्भवति । सम्प्रति परिज्ञानोपायमाह—

सड्ढस्स थेवदिवसेसु संखडी आसि संघभत्तं वा । पुच्छित्तु निउणपुच्छं संलावाओ वऽगारीणं ॥ २७० ॥

व्याख्या—इह प्रथमत आगतेन श्राद्धगृहे तथाविधं किमपि सङ्खड्यादि चिह्नमुपलभ्य पूतिदोषसंशयभावे श्राद्धस्य पार्श्वे उपलक्षणमेतत् श्राविकादेश्च पार्श्वे निपुणपृच्छं प्रष्टव्यं, यथा–युष्माकं गृहे ' स्तोकदिवसेषु ' स्तोकदिवसमध्ये, प्रभूतदिवसातिक्रमेण पूतिदोषो न सम्भवतीति स्तोकदिवसग्रहणं, ' सङ्खडिः ' वीवाहादिप्रकरणरूपा सङ्घभक्तं वा दत्तमासीत्?, सङ्खड्यां वा साधुनिमित्तं किमपि कृतं आभवत्?, ततस्तद्दिनादर्वाग् दिनत्रयं पूतिरितिकृत्वा परिहर्त्तव्यं, चतुर्थादिषु तु दिनेषु परिग्राह्यम्, अथवा क्वापि प्रश्नमन्तरेणाप्यगारिणीनां संलापात् पूतिरपूतिर्वेति ज्ञातव्यं, ता हि अपृष्टा एवान्यमुद्दिश्य कथयन्ति, यथाऽस्माकं श्वः परतरे वा दिने सङ्घभक्तं दत्तमासीत्, यद्वा–सङ्खडिः सङ्खड्यां च कृतं साध्वर्थं प्रभूतमशनादिकमिति, तत एवं तासां संलापानाकर्ण्य पूत्यपूती ज्ञात्वा परिहारग्रहणे कार्ये, उक्तं पूतिद्वारं । सम्प्रति मिश्रजातद्वारमाह—

मीसज्जायं जावंतियं च पासंडिसाहुमीसं च । सहसंतरं न कप्पइ कप्पइ कप्पे कए तिगुणे ॥ २७१ ॥

व्याख्या—मिश्रजातं त्रिधा, तद्यथा—यावदर्थिकं पाखण्डिमिश्रं साधुमिश्रं च, तत्र यावन्तः केचन गृहस्था अगृहस्था वा भिक्षाचराः समागमिष्यन्ति तेषामपि भविष्यति कुटुम्बे चेतिबुद्ध्या सामान्येन भिक्षाचरयोग्यं कुटुम्बयोग्यं चैकत्र मिलितं यत्पच्यते तद्यावदर्थिकं मिश्रजातं । यत्तु केवलपाखण्डियोग्यमात्मयोग्यं चैकत्र पच्यते तत्पाखण्डिमिश्रं । यत्पुनः केवलसाधुयोग्यमात्मयोग्यं चैकत्र पच्यते तत्साधुमिश्रं । श्रमणानां पाखण्डिष्वन्तर्भावविवक्षणात् श्रमणमिश्रं पृथग्नोक्तम् । एतच्च मिश्रजातं ' सहस्रान्तरमपि ' सहस्रान्तरे गतमपि–येन तत्कृतं तेनान्यस्मै दत्तं तेनाप्यन्यस्मै यावत्सहस्रतमाय दत्तं, ततोऽपि परं यदि साधवे ददाति तथापि न कल्पते । भाजनशुद्धौ

व्याख्या—'आत्मार्थं' कुटुम्बार्थं गृहिण्या 'राध्यमाने' पच्यमाने गृहनायको यावदर्थिकमिश्रप्रवर्त्तकगृहनायकापेक्षया द्वितीयो भणाति, यथा पाखण्डिनामप्यर्थायाधिकं प्रक्षिप । तथाऽऽत्मार्थमेव राध्यमाने तृतीयो गृहनायको ब्रूते, यथा–निर्ग्रन्थानामर्थायाधिकं प्रक्षिपेति । तत एवं श्रुते पाखण्डिमिश्रसाधुमिश्रयोरपि परिज्ञानं भवति । सम्प्रति यदुक्तमेतत् 'मिश्रजातं पुरुषसहस्रान्तरगतमपि न कल्पते' इति, तद्दृष्टान्तेन भावयति—

विसघाइय पिसियासी मरइ तमन्नोवि खाइउं मरइ । इय पारंपरमरणे अणुमरइ सहस्ससो जाव ॥ २७४ ॥

व्याख्या—इह कोऽपि वेधकेन विषेण घातितः, तस्य पिशितं योऽश्नाति सोऽपि म्रियते, तस्यापि मांसं यो भक्षयति सोऽपि म्रियते, एवं परम्परया मरणे तावद् 'अनु' पाश्चात्यः पाश्चात्यो म्रियते, यावत्ते म्रियमाणाः सङ्ख्यया सहस्रशो भवन्ति । इत्थं सहस्रवेधकस्य विषस्य प्रभावः यत्सहस्रान्तरगतमपि मारयतीति भावः ।

एवं मीसज्जायं चरणप्पं हणइ साहु सुविसुद्धं । तम्हा तं नो कप्पइ पुरिससहस्संतरगयंपि ॥ २७५ ॥

व्याख्या—'एवं' सहस्रवेधकविषमिव यावदर्थिकपाखण्डिसाधुविषयं मिश्रजातमप्येकेनान्यस्मै दत्तं तेनाप्यन्यस्मायित्येवं परम्परया पुरुषसहस्रान्तरगतमपि साधोः सुविशुद्धं चरणात्मानं हन्ति, तस्मान्न कल्पते साधूनां सहस्रान्तरगतमपि मिश्रं । सम्प्रति साधुविषयं विधिमाह–

निच्छोडिए करीसेण वावि उव्वट्टिए तओ कप्पा । सुक्काविता गिण्हइ अन्न चउत्थे असुक्केऽवि ॥ २७६ ॥

व्याख्या—मिश्रे कथमपि गृहीते पश्चात्तस्मिंस्त्यक्ते सति भाजने 'निच्छोटिते' अङ्गुल्यादिना निरवयवे कृते यद्वा 'करीषेण'

शुष्कगोमयरूपेण उद्वर्तिते पश्चात् त्रयः कल्पा दीयन्ते, तत आतपे तद् भाजनं शोपयित्वा पश्चात्तस्मिन्नव्यते-शुद्धं गृह्णाति, नान्यथा, पूतिदोपसम्भवात्, अन्ये तु सूरयः प्राहुः-चतुर्थे कल्पे दत्ते सति अशुष्केऽपि, गृह्णन्ति, नास्ति कश्चिद्दोपः, अयं च प्रक्षालनविधिः सर्वत्राप्यशोधिकोटिग्रहणे वेदितव्यः, उक्तं मिश्रद्वारम् । अथ स्थापनाद्वारमाह—

सट्टाणपरट्ठाणे दुविहं ठवियं तु होइ नायव्वं । खीराइ परंपरए हत्थगय घरंतरं जाव ॥ २७७ ॥

व्याख्या—स्थापितं साधुनिमित्तं घृतभक्तादि, तच्च द्विधा, तद्यथा—स्वस्थाने परस्थाने च, तत्र स्वस्थानं चुल्ल्यवचुल्ल्यादि, परस्थानं छब्बकादि, एकैकं द्विधा—अनन्तरं परम्परं च, तत्र यस्य साधुनिमित्तं स्थापितस्य सतो विकारान्तरं न भविष्यति यथा घृतादेस्तदनन्तरस्थापितं । क्षीरादिकं तु परम्परके परम्परास्थापितं, तथाहि—क्षीरं स्थापितं सद्दधि भवति, तद्दधि भूत्वा नवनीतं, नवनीतं भूत्वा घृतं, ततो यदैव साधुनिमित्तं क्षीरं धृत्वा घृतीकृत्य ददाति तदा तत् क्षीरं परम्परास्थापितं भवति, एवमन्यदपीक्षुरसादिकं द्रष्टव्यं, तथा पङ्क्तिस्थिते गृहत्रये उपयोगावकाशसम्भवे सति हस्तगतासु तिसृषु भिक्षास्वेकः साधुरेकां भिक्षां सम्यगुपयोगेन परिभावयन् गृह्णाति, द्वितीयस्तु द्वयोर्गृहयोर्हस्तगते द्वे भिक्षे परिभावयति, ततो गृहत्रयात्परतो यावद्गृहान्तरं न भवति तावन्न तस्य स्थापनादोपः, गृहान्तरे तु साधुनिमित्तं हस्तगता भिक्षा स्थापना, तत्रोपयोगासम्भवात् । तत्रैनामेव गाथां भाष्यकृद्व्याचिख्यासुः प्रथमतः स्वस्थानमाह—

चुल्ली अवचुल्लो वा ठाणसठाणं तु भायणं पिढरे । सट्ठाणट्ठाणंमि य भायणठाणे य चउभंगा ॥३४॥ (भा०)

व्याख्या—द्विविधं स्थानं, तद्यथा—स्थानस्वस्थानं भाजनस्वस्थानं च, तत्र स्थानरूपं स्वस्थानं चुल्ली अवचुल्लो वा, चुल्ल्या अव-पश्चादवचुल्लो, राजदन्तादित्वादवशब्दस्य पूर्वनिपातोऽदन्तता च, तत्र 'चुल्ली' प्रतीता, 'अवचुल्लः' अवल्हकः, एतयोश्च स्थितं सद् भक्तं पच्यते,

तत एतौ स्थानरूपं स्वस्थानं, भाजनरूपं तु स्वस्थानं 'पिठरं' स्थाली, तत्र स्थानस्वस्थाने भाजनस्वस्थाने च चत्वारो भङ्गाः, तद्यथा—चुल्ल्यां स्थापितं पिठरे च १, चुल्ल्यां स्थापितं न पिठरे छब्बकादौ स्थापितत्वात् २, न चुल्ल्यां किन्तु पिठरे, तच्च चुल्ल्यवचुल्लाभ्यामन्यत्र प्रदेशान्तरे स्थापितं द्रष्टव्यं ३, न चुल्ल्यां न पिठरे चुल्ल्यवचुल्लाभ्यामन्यत्र छब्बकादौ स्थापितमित्यर्थः ४ । सम्प्रति परस्थानमाह—

छब्बगवारगमाई होइ परट्ठाणमो वऽणेगविहं । सट्ठाणे पिढरे छब्बगे य एमेव दूरे य ॥ २७८ ॥

व्याख्या—छब्बकवारकादिकमनेकविधं भाजनं परस्थानं भवति द्रष्टव्यं, तत्र 'छब्बकं' पटलिकादिरूपं, 'वारकः' लघुघटः, आदिशब्दात्पाकभाजनवर्जचुल्ल्यवचुल्लवर्जशेपसकलभाजनपरिग्रहः, अत्रापि स्वस्थानपरस्थानापेक्षया चतुर्भङ्गी, तद्यथा—स्वस्थाने स्वस्थाने, स्वस्थाने परस्थाने, परस्थाने स्वस्थाने, परस्थाने परस्थाने । एनामेव चतुर्भङ्गीं दर्शयति—'सट्ठाण' इत्यादि, अत्र 'सट्ठाणे पिढरे छब्बगे य' इत्यनेन भङ्गद्वयं सूचितं, स्वस्थानस्य पिठरछब्बकाभ्यां प्रत्येकमभिसम्बन्धात्, तद्यथा—स्वस्थाने चुल्ल्यादौ पिठरे च, तथा स्वस्थाने चुल्ल्यादौ छब्बके च परस्थाने, 'एमेव दूरे य'त्ति इह दूरं चुल्ल्यवचुल्लाभ्यामन्यत्प्रदेशान्तरं, तत्रापि तदपेक्षयाऽपि एवमेव भङ्गद्वयं द्रष्टव्यं, तद्यथा—भाजनरूपे स्वस्थाने पिठरे परस्थानेऽन्यत्र प्रदेशान्तरे, तथा परस्थानेऽन्यत्र प्रदेशान्तरे परस्थाने छब्बगादाविति सर्वसङ्ख्यया चत्वारो भङ्गाः । तदेवं मूलगाथायाः सट्ठाणेत्यादिपूर्वार्द्धं व्याख्यातम् । अथ 'खीराइ परंपरए' इति व्याचिख्यासुराह—

एक्केक्कं तं दुविहं अणंतरपरंपरे य नायव्वं । अविकारिकयं दव्वं तं चेव अणंतरं होइ ॥ २७९ ॥

व्याख्या—तत्साधुनिमित्तं स्थापितमेकैकं स्वस्थानगतं परस्थानगतं च द्विविधं ज्ञातव्यं, तद्यथा—'अनन्तरे' अन्तराभावे, विकाररूपव्यवधानाभावे इत्यर्थः, 'परम्परके' विकारपरम्परायामित्यर्थः, तत्र यत् कर्त्रा स्वयोगेनाविकारि भूयोऽसम्भविविकारं घृतगुडादि कृतं

न हि तस्य भूयोऽपि विकारः सम्भवति तत्साधुनिमित्तं स्थापितमनन्तरम्—अनन्तरस्थापितं, उपलक्षणमेतत्, तेन क्षीरादिकमपि यस्मिन् दिने साधुनिमित्तं स्थापितं यदि तस्मिन्नेव दिने ददाति तर्हि तदपि दध्यादिरूपं विकारान्तरमनापद्यमानमनन्तरस्थापितं द्रष्टव्यं, तदेव तु क्षीरं साधुनिमित्तं घृतं सद्दध्यादिरूपतया परिकर्म्यमाणं परम्परास्थापितं भवति, एवमिक्षुरसादिकमपि तस्मिन्नेव दिने स्थापितं दीयमानमनन्तरस्थापितं, कक्कबादिरूपतया तु परिकर्म्यमाणं परम्परास्थापितमिति । सम्प्रति विकारीतराणि द्रव्याणि प्रतिपादयति—

उच्छुक्खीराईयं विगारि अविगारि घयगुलाईयं । परियावज्जणदोसा ओयणदहिमाइयं वावि ॥ २८० ॥

व्याख्या—इक्षुक्षीरादिकं विकारि तस्य कक्कबादिदध्यादिविकारसम्भवात्, घृतगुडादिकं त्वविकारि तस्य भूयोऽपि विकारासम्भवात्, तथा 'ओदनदध्यादिकमपि' करम्बादिरूपं विकारि, कुत इत्याह—पर्यापादनदोषात्, करम्बादिकं हि ध्रियमाणं नियमात् पर्यापद्यते—कोथमायातीत्यर्थः, ततस्तदपि विकारि द्रव्यं । तदेवं विकारीतराणि द्रव्याण्यभिहितानि, सम्प्रति क्षीरादिकं परम्परास्थापितं भावयति—

उब्भट्ठपरिन्नायं अन्नं लद्धं पओयणे घेत्थी । रिणभीया व अगारी दहिंत्ति दाहं सुए ठवणा ॥ २८१ ॥

नवणीय मंथुतक्कं व जाव अत्तट्ठिया व गिण्हंति । देसूणा जाव घयं कुसणंपि य जत्तियं कालं ॥ २८२ ॥

व्याख्या—'उब्भट्ठ'त्ति केनापि साधुना कस्याश्चिदगारिण्याः सकाशे क्षीरमभ्यर्थितं, ततस्तया प्रतिज्ञातं—क्षणान्तरे दास्यामि, साधुना चान्यत्रान्यत् क्षीरं लब्धं, ततः पूर्वमभ्यर्थितयाऽगारिण्या दुग्धसम्प्राप्तौ सत्यां साधुं प्रति प्रत्यपादि—गृहाण भगवन्निदं दुग्धमिति,

साधुना चोक्तं—लब्धमन्यत्र मया दुग्धं, ततो यदि भूयोऽपि प्रयोजनं भविष्यति तर्हि 'घेत्थो'गृहीष्यामि, एवमुक्ते साऽगारिणी ऋणभीतेव स्वयं नोपबुभुजे, किन्त्वेवं चिन्तयामास—'श्वः' कल्ये दधि कृत्वा दास्यामीति, तत एवं चिन्तयित्वा स्थापयति, ततो द्वितीयदिने दधि जातं तदपि साधुना न गृहीतं, ततो नवनीतं तक्रं च जातं, नवनीतमपि घृतं कृतं, इह क्षीरादिकं सकलमपि स्थापनादोषदुष्टत्वात् साधूनां न कल्पते, यद्वा क्षीरादिकं यावन्नवनीतं मस्तु तक्रं वा तावदेतानि सर्वाण्यप्यात्मार्थीकृतानि मा गृह्णीयात् साधुः कुटुम्बे भविष्यतीत्येवमात्मसत्ताकीकृतानि साधवो गृह्णन्ति । घृतं त्वात्मार्थीकृतमपि तेजःकायाऽऽरम्भादाधाकर्मेति न कल्पते, घृतं च स्थापितं सत् तावद् वर्तते यावद्देशोना पूर्वकोटी, तथाहि—पूर्वकोट्यायुषा केनापि साधुना वर्षाष्टकप्रमाणेन कस्याश्चित्पूर्वकोट्यायुषोऽगारिण्याः पार्श्वे घृतं ययाचे, तयोक्तं—क्षणान्तरे दास्यामि, साधुना चान्यत्र घृतं लब्धं, ततः सा ऋणभीतेव तावद् घृतं धृतवती यावत् साधोरायुः, ततो मृते साधौ तदन्यत्रोपयुक्तमिति नास्ति स्थापना, इह वर्षाष्टकस्याधः पूर्वकोटेरुपरि च चारित्रं न भवति, चारित्रिणं चाधिकृत्य स्थापनादोषः, ततो देशोना पूर्वकोटीत्युक्तम् । एवं गुडादेरप्यविनाशिनो द्रव्यस्य यथायोगं स्थापनाकालपरिमाणं द्रष्टव्यं । 'कुसुणियंपि'त्ति कुसुणितमपि करम्बादिरूपतया कृतमपि यावन्तं कालमविनाशि तावत्कालं तस्य स्थापना द्रष्टव्या, परतस्तु कुथितत्वादुज्झ्यते एवेति भावः ॥ तदेवं क्षीरादिकं परम्परास्थापितमुक्तं, साम्प्रतमिक्षुरसादिकमपि परम्परास्थापितमाह—

रस कक्कब पिंडगुला मच्छंडिय खंडसक्कराणं च । होइ परंपरठवणा अन्नत्थ व जुज्जए जत्थ ॥ २८३ ॥

व्याख्या—इह केनापि साधुना किमपि प्रयोजनमुद्दिश्य कोऽपीक्षुरसं याचितः, स च प्रतिज्ञातवान्—क्षणान्तरे दास्यामि, साधुना चान्यत्रेक्षुरसो लब्धः, पूर्वमभ्यर्थितश्च ऋणभीत इव तमिक्षुरसं कक्कवं करोति यावत् शर्करेति, एषां चेक्षुरसकक्कवादीनामुत्तरोत्तरपिण्ड-

एवं विचिन्त्य परतो वीवाहं करोति, इदं च विवाहस्यावष्वष्कणमुत्ष्वष्कणं वा कृत्वा यदुपस्क्रियते भक्तादि सा वादरा प्राभृतिका ॥ सम्प्रत्यपसर्प्पणरूपां सूक्ष्मप्राभृतिकां भाष्यकृद्गाथाद्वयेनाह—

कन्तामि ताव पेलुं तो ते देहामि पुत्त! मा रोव। तं जइ सुणेइ साहू न गच्छए तत्थ आरंभो ॥ ३५ ॥ (भा०)

अन्नट्ठ उट्ठिया वा तुब्भवि देमित्ति किंपि परिहरति। किह दाणि न उट्ठिहिसी? साहुपभावेण लब्भामो ॥३६॥ (भा०)

व्याख्या—काचित्कर्त्तनं कुर्वती भोजनं याचमानं वालकं प्रति वदति–कृणन्मि तावदिदं 'पेलुं' रूतपूणिकां, कृणन्मीति 'कृदुप-वेष्टने' इत्यस्य रौधादिकस्य प्रयोगः, ततः पश्चात् 'ते' तुभ्यं दास्यामीति मा रोदीः, अत्रान्तरे च साधुरागतो यदि शृणोति तर्हि तत्र गृहे न गच्छति, न तत्र भिक्षां गृह्णातीत्यर्थः, मा भूत्साधुनिमित्त आरम्भो वालकभोजनदानतदनन्तरहस्तधावनादिरूपः, सा हि साध्वर्थ-मुत्थिता सती वालकस्यापि भोजनं ददाति, ततो हस्तधावनादिनाऽप्कायादिकं च विनाशयति, इह रूतपूणिकाकर्त्तनसमाप्त्यनन्तरं दात-व्यतया वालकाय प्रतिज्ञाते भोजने साधुनिमित्तमर्वागुत्थानेन यदर्वागेव वालस्य भोजनदानं तदवसर्प्पणम्, अथवा गृहस्था कर्त्तनं कुर्वती भोजनं याचमानं पुत्रं प्रति वदति–'अन्यार्थम्' अन्येन प्रयोजनेनोत्थिता सती 'तत्रापि' तुभ्यमपि किमपि खादिमादि दास्यामि, अत्रा-न्तरे च साधुरागत एवं श्रुते परिहरति, अथवा तथाभूतगृहस्थावचनानाकर्णनेऽपि साधौ समागते वालको जननीं वदति–कथमिदानीं नोत्थास्यसि?, समागतो ननु साधुस्ततोऽवश्यमुत्थातव्यं त्वया, तथा च सति साधुप्रभावेण वयमपि लप्स्यामहे, तत एवं वालकवचनं श्रुत्वा तया दीयमानं परिहरति, मा भूदवसर्प्पणरूपसूक्ष्मप्राभृतिकादोषः। सम्प्रत्युत्सर्प्पणरूपां सूक्ष्मप्राभृतिकां गाथाद्वयेनाह—

अप्पत्तंमि य ठवियं ओसरणे होहिइत्ति उस्सकणं ।

व्याख्या—स्थापितं विवाहदिनं किलाप्राप्ते–यथाविहारक्रममनागते 'अवसरणे' साधुसमुदायरूपे भविष्यति, ततो न किमपि मदीयं विवाहसत्कं साधूनामुपकरिष्यतीतिकृत्वा विवाहस्योत्सर्प्पणं करोति, साधुसमागमकाल एव करोतीत्यर्थः। उक्ता बादरा प्राभृतिका। सम्प्रति द्विविधाया अप्यवसर्प्पणोत्सर्पणरूपायाः कर्त्तारं प्रतिपादयति—

तं पागडमियरं वा करेइ उज्जू अणुज्जू वा ॥ २८९ ॥

व्याख्या—'ताम्' अवष्वष्कणोत्ष्वष्कणरूपां द्विविधामपि ऋजुः प्रकटं करोति, सकलजननिवेदनेन करोति, अनृजुरितरत्–प्रच्छन्नं, यथा न कोऽपि जानातीति भावः, तत्र यदि प्रकटं करोति तर्हि तां जनपरम्परात एव ज्ञात्वा परिहरन्ति, अथाप्रकटं तर्हि निपुणं शोधयित्वा वर्जयन्ति, निपुणशोधनेऽपि यदि कथमपि न परिज्ञानं भवति तदा न कश्चिद्दोषः, परिणामस्य शुद्धत्वात् ॥ अथ किमर्थं बादरमवष्वष्कणादिकं करोति ?, तदाह—

मंगलहेउं पुन्नट्ठया व ओसक्कियं दुहा पगयं । उस्सक्कियंपि किंति य पुट्ठे सिट्ठे विवज्जंति ॥ २९० ॥

व्याख्या—'प्रकृतं' विवाहादिकं 'द्विधा' द्वाभ्यां प्रकाराभ्यामवष्वाष्कितं भवति, तद्यथा–'मङ्गलहेतोः' वीवाहे गृहस्य साधुचरणैः स्पर्शनं तेभ्यो दानं च मङ्गलायेतिकृत्वा, यद्वा–पुण्यार्थम्, एवमुत्ष्वाष्कितमपि द्विधा, ततो निपुणपृच्छं किमिदम् ? इति पृष्टे गृहस्थेन च यथावस्थिते कथिते तद्वीवाहसत्कं परिहरन्ति, मा भूद्बादरप्राभृतिकादोषानुषङ्ग इति । ये तु न परिहरन्ति तेषां दोषमाह—

पाहुडिभत्तं भुंजइ न पडिक्कमए अ तस्स ठाणस्स । एमेव अडइ बोडो लुक्कविलुक्को जह कवोडो ॥ २९१ ॥

व्याख्या—यः प्राभृतिकाभक्तं भुङ्क्ते न च तस्मात् प्राभृतिकापरिभोगरूपात् स्थानात्प्रतिक्रामति स 'बोडः' मुण्ड एवमेव—निष्फलमटति यथा लुञ्चितविलुञ्चितकपोतः । उक्तं प्राभृतिकाद्वारम्, अथ प्रादुष्करणद्वारं बिभणिषुः प्रथमतस्तत्सम्भवं गाथाषट्केनाह—

लोयविरलुत्तमंगं तवोकिसं जल्लखउरियसरीरं । जुगमेत्तंतरदिट्ठिं अतुरियचवलं सगिहमिंतं ॥ २९२ ॥

दट्ठूण य अणगारं सड्ढी संवेगमागया काइ । विपुलन्नपाण घेत्तूण निग्गया निग्गओ सोऽवि ॥ २९३ ॥

नीयदुवारंमि घरे न सुज्झई एसणत्तिकाऊणं । नीहंमिए अगारी अच्छइ विलिया व गहिएणं ॥ २९४ ॥

चरणकरणालसंमि य अन्नंमि य आगए गहिय पुच्छा । इहलोगं परलोगं कहेइ चइउं इमं लोगं ॥ २९५ ॥

नीयदुवारंमि घरे भिक्खं निच्छंति एसणासमिया । जं पुच्छसि मज्झ कहं कप्पइ लिंगोवजीवीऽहं ॥ २९६ ॥

साहुगुणेसणकहणं आउट्टा तंमि तिप्पइ तहेव । कुक्कुडि चरंति एए वयं तु चिन्नव्वया बीओ ॥ २९७ ॥

व्याख्या—काचित् श्राविका 'अनगारं' साधुमेकाकिविहारिणं लोचविरलोत्तमाङ्गम्, अत्रोत्तमाङ्गशब्देनोत्तमाङ्गस्थाः केशा उच्यन्ते, ततोऽयमर्थः—लोचेन विरलोत्तमाङ्गकेशं तपःकृशं मलकलुषितशरीरं युगमात्रान्तरन्यस्तदृष्टिम् अत्वरितमचपलं स्वगृहमागच्छन्तं दृष्ट्वा संवेगमागता, ततो गृहमध्ये विपुलं भक्तं पानं च गृहीत्वा गृहमध्याद्विनिर्गता, सोऽपि च साधुर्नीचद्वारेऽस्मिन् गृहे न शुध्यति ममै-

पणेतिकृत्वा ततः स्थानाद्विनिर्जगाम, निर्गते च तस्मिन् गृहीतेन भक्तपानेन सञ्जातविप्रियेवावतिष्ठते, अत्रान्तरे चरणकरणालसोऽन्यस्तस्मिन् गृहे साधुर्भिक्षार्थमागतः, ततस्तस्मै सा भिक्षा तया दत्ता, गृहीतायां च भिक्षायां स साधुः पृष्टः—यथा भगवन् ! इदानीमेव साधुरीदृशस्तादृशो वाऽत्र समागतः, परं तेन भिक्षा न गृहीता, त्वया गृहीता, तत्र किं कारणं ?, ततः स ऐहलौकिकं भिक्षालाभमात्रादिकं पारलौकिकं धर्मं यथाक्रममल्पगुणं बहुगुणं च विचिन्त्येमं लोकं—लोकात् लभ्यं भिक्षामात्रादिकं परित्यज्योक्तवान्—यथा नीचद्वारे गृहे साधव एषणासमितिसमिता भिक्षां नेच्छन्ति, तत्रान्धकारभावत एषणाशुद्ध्यभावात्, सोऽपि च भगवान् साधुरेषणासमितस्ततो न गृहीतवानिति, यदप्युक्तं—किं कारणं त्वया गृहीता ? इति, तत्राहं लिङ्गमात्रोपजीवी, न साधुगुणयुक्तः, ततः साधूनां गुणानेषणां च यथाऽऽगमं कथितवान्, ततः सा स्वचेतसि चिन्तयामास—अहो ! जगति निजदोषप्रकटनं परगुणोत्कीर्त्तनं चातिदुष्करं, तदप्येतेन कृतमिति तस्मिन्नतिशयेन भक्तिं कृतवती, विपुलं च भक्तपानं 'तिप्पइ' इति तेपते क्षरति ददाति स्मेति भावार्थः, गते च तस्मिन्नन्यः कोऽप्यगणितदीर्घसंसारपरिभ्रमणभयो निर्द्धर्मा साधुराजगाम, सोऽपि भिक्षां दत्त्वा तथैव पृष्टः, ततः स पापीयानुक्तवान्—एते इत्थंभूताः 'कुकुच्या' मायया चरन्ति, ततस्त्वदीयचित्तावर्जनार्थं तेन मातृस्थानतो न भिक्षा गृहीता, यावता न तत्र कश्चिद्दोषः, ईदृशानि च मातृस्थानबहुलानि व्रतान्यस्माभिरपि पूर्वं चीर्णानि, परमिदानीं चिन्तितं—किं मातृस्थानकरणेनेति न मायां कुर्मः ?, ततः सा चिन्तितवती—अहो ! अयं निर्द्धर्मा महापापीयान् यस्तादृशमपि साधुं निन्दतीति विसर्जितः ॥ इत्थंभूता च भक्तिपरवशगा साधुदानाय प्रादुष्करणमपि कुर्यादिति प्रादुष्करणसम्भवः । सम्प्रति तदेव प्रादुष्करणं गाथाद्वयेनाह—

पाओकरणं दुविहं पागडकरणं पगासकरणं च । पागड संकामण कुड्डदारपाए य छिन्ने व ॥ २९८ ॥

रयणपईवे जोई न कप्पइ पगासणा सुविहियाणं । अत्तट्ठि अपरिभुत्तं कप्पइ कप्पं अकाऊणं ॥ २९९ ॥

व्याख्या—प्रादुष्करणं द्विधा, तद्यथा–प्रकटकरणं प्रकाशकरणं च, तत्र 'प्रकटकरणम्' अन्धकारादपसार्य वहिः प्रकाशे स्थापनं, 'प्रकाशकरणं' स्थानस्थितस्यैव भित्तिरन्ध्रकरणादिना प्रकटीकरणम्, एतदेवाह—तत्र प्रकटकरणमन्धकारादन्यत्र सङ्क्रामणेन प्रकाशकरणं, 'कुड्डदारपाए' इत्यादि, अत्र सर्वत्रापि तृतीयार्थे सप्तमी, कुड्यस्य द्वारपातेन–रन्ध्रकरणेन, यदिवा कुड्येन मूलत एव छिन्नेन येन कुड्येन कुड्यैकदेशेन वाऽन्धकारमासीत् तेन मूलत एवापनीतेनेत्यर्थः, चशब्दादन्यस्य द्वारस्य करणेन चेत्यादिपरिग्रहः, तथा 'रत्नेन' पद्मरागादिना 'प्रदीपेन' प्रतीतेन 'ज्योतिषा' ज्वलता वैश्वानरेण तत्रैवं प्रकाशना सुविहितानां न कल्पते, किमुक्तं भवति ?–प्रकाशकरणेन प्रकटकरणेन च यद्दीयते भक्तादि तत्संयतानां न कल्पते, तत्रैवापवादमाह—'अत्तट्ठि'त्ति आत्मार्थीकृतं तदपि कल्पते, नवरं ज्योतिःप्रदीपौ वर्जयेत्, ताभ्यां प्रकाशितमात्मार्थीकृतमपि न कल्पते, तेजस्कायदीप्तिसंस्पर्शनात्, साधुपात्रमाश्रित्य विधिमाह—इह सहसाकारादिना प्रादुष्करणदोषाघ्रातं कथमपि भक्तं पानं वा गृहीतं ततस्तद् अपरिभुक्तम् उपलक्षणमेतद् अर्द्धभुक्तमपि परिस्थाप्योद्धरितसिक्थुलेपादिना खरण्टितेऽपि तस्मिन् पात्रे 'कल्पं' जलप्रक्षालनरूपमकृत्वाप्यन्यत् शुद्धं ग्रहीतुं कल्पते । एतदेव गाथाद्वयं विवरीषुः प्रथमतश्चुल्लीसङ्क्रमणमाश्रित्य प्रकटकरणं स्पष्टयति—

संचारिमा य चुल्ली बहिं व चुल्ली पुरा कया तेसिं । ताहि रंधंति कयाई उवही पूई य पाओ य ॥ ३०० ॥

व्याख्या—इह त्रिधा चुल्ली, तद्यथा—एका सञ्चारिमा या गृहाभ्यन्तरवर्त्तिन्यपि वहिरानेतुं शक्यते, चशब्दात्साऽप्याधाकर्मिकी

द्रष्टव्या, द्वितीया बहिरेव तेषां साधूनां निमित्तं चुल्ली पुरा कृता आसीत्, चशब्दात्तदानीं वा साधुनिमित्तं बहिश्चुल्ली कृता वेदितव्या, सा च तृतीया। ततो यदि कदाचित्तत्र तिसृणां चुल्लीनामन्यतमस्यां गृहस्था राध्यन्ति ततो द्वौ दोषौ, तद्यथा—उपकरणपूतिः प्रादुष्करणं च, यदा च चुल्याः पृथक्कृतं तद्देयं वस्तु तदा प्रादुष्करणरूप एवैकः केवलो दोषः, पूतिदोषस्तूत्तीर्णः, यदा चुल्ल्योऽपि शुद्धास्तदापि प्रादुष्करणरूप एवैको दोषः। यदर्थं प्रादुष्करणं गृहस्था कृतवती तं भिक्षायै गृहमागच्छन्तं दृष्ट्वा यदृजुत्वेन भाषते तदाह—

नेच्छह तमिसंमि तओ बाहिरचुल्लीएँ साहु सिद्धण्णे। इय सोउं परिहरए पुट्ठे सिट्ठंमिवि तहेव ॥ ३०१ ॥

व्याख्या—हे साधो! त्वं 'तमिस्रे' अन्धकारे भिक्षां नेच्छसि ततो बहिश्चुल्ल्यां सिद्धं पक्वम् 'अन्न'मिति अस्माभिर्भक्तमिति श्रुत्वा तया दीयमानं परिहरति, प्रादुष्करणदोषदुष्टत्वात्, तथा प्रादुष्करणशङ्कायां किमर्थमयमाहारोऽद्य गृहस्य बहिस्तात्पक्वः?, इत्येवं पृष्टे तया ऋजुतया यथावस्थिते कथिते तथैव परिहरति, एतेनाद्यगाथायां 'संक्रामण' इत्यवयवो व्याख्यातः। नन्वयं सङ्क्रामणकृत आहारः केनापि प्रकारेण कल्पते? किं वा न? इति, उच्यते, आत्मार्थीकृतः कल्पते, कथमस्यात्मार्थीकरणसम्भव? इति चेदत आह—

मच्छियघम्मा अंतो बाहि पवायं पगासमासन्नं। इय अत्तट्ठियगहणं पागडकरणे विभासेयं ॥ ३०२ ॥

व्याख्या—साध्वर्थं पूर्वं बहिश्चुल्ल्यादि कृत्वा काचिदेवं चिन्तयति—गृहस्यान्तर्मक्षिका घर्मश्च, उपलक्षणमेतत्, तेनान्धकारं दूरं च पाकस्थानाद्भोजनस्थानमित्यादिपरिग्रहः, बहिश्च प्रवातं तेन मक्षिकादयो न भवन्ति, तथा प्रकाशमासन्नं च पाकस्थानाद्भोजनस्थानं, ततो वयमत्रैवात्मनिमित्तमपि सदैव पक्ष्याम इत्येवमात्मार्थीकृते ग्रहणं, कल्पते इति भावः। इयं प्रकटकरणे कल्प्याकल्प्यविषया विभाषा, सम्प्रति प्रकाशकरणं स्पष्टयन् 'कुड्डदारपाए' इत्यादि व्याचिख्यासुराह—

कारं, तद्यथा—' दव्वे भावे य ' अत्र तृतीयार्थे सप्तमी, ततोऽयमर्थः—द्रव्येण क्रीतं भावेन च क्रीतमित्यर्थः, पुनरप्येकैकं द्रव्यक्रीतं भावक्रीतं च प्रत्येकं द्विधा, तद्यथा—आत्मक्रीतं परक्रीतं च, आत्मद्रव्यक्रीतमात्मभावक्रीतं च परद्रव्यक्रीतं परभावक्रीतं चेत्यर्थः, तत्रात्मना—स्वयमेव द्रव्येणोज्जयन्तभगवत्प्रतिमाशेषादिरूपेण प्रदानतः परमावर्ज्य यद्भक्तादि गृह्यते तदात्मद्रव्यक्रीतं, यत्पुनरात्मना स्वयमेव भक्ताद्यर्थं धर्मकथादिना परमावर्ज्य भक्तादि ततो गृह्यते तदात्मभावक्रीतं, तथा यत् परेण साधुनिमित्तं द्रव्येण क्रीतं तत्परद्रव्यक्रीतं, यत्पुनः परेण साध्वर्थं निजविज्ञानप्रदर्शनेनापरमावर्ज्य ततो गृहीतं तत्परभावक्रीतं, तत्र ' विचित्रा सूत्रगति'रिति प्रथमतः परद्रव्यक्रीतस्य स्वरूपमाह—परद्रव्यं—गृहस्थसत्कं द्रव्यं त्रिविधं, तद्यथा—' चित्तादि ' सचित्तमचित्तं मिश्रं च, तेन परेण साध्वर्थं यत्क्रीतं तत्परद्रव्यक्रीतम् ॥ उक्तं परद्रव्यक्रीतं, सम्प्रति शेषं भेदत्रयं सामान्यतः कथयति—

आयकियं पुण दुविहं दव्वे भावे य दव्व चुन्नाई । भावंमि परस्सट्ठा अहवावी अप्पणा चेव ॥ ३०७ ॥

व्याख्या—आत्मक्रीतं पुनर्द्विविधं, तद्यथा—' दव्वे भावे य 'त्ति अत्रापि तृतीयार्थे सप्तमी, ततोऽयमर्थः—आत्मनाऽपि क्रीतं द्विधा, तद्यथा—द्रव्येण भावेन च, तत्र द्रव्येण—चूर्णादिना वक्ष्यमाणेन, भावेन पुनः परस्य—साधोरर्थाय यन्निजविज्ञानप्रदर्शनादिनोपार्ज्यते तद्भावक्रीतं, परभावक्रीतमित्यर्थः, अथवा भावेन यदात्मना स्वयमेवाहारार्थं धर्मकथादिना परमावर्ज्य ततो गृह्यते तद्भावक्रीतम्, आत्मभावक्रीतमित्यर्थः । तदेवं सामान्यतस्त्रयोऽपि भेदा उक्ताः, सम्प्रत्यात्मद्रव्यक्रीतं सप्रपञ्चं विवरीषुरिदमाह—

निम्मल्लगंधगुलिया. वन्नय पोत्ताइ आयकय दव्वे । गेलन्ने उड्डाहो पउणे चडुगारि अहिगरणं ॥ ३०८ ॥

व्याख्या—'निर्माल्यं' तीर्थादिगतसप्रभावप्रतिमाशेषा 'गन्धाः' पटवासादयः 'गुलिका' मुखे प्रक्षेपकस्य स्वरूपपरावर्त्तादि कारिका गुटिका 'वर्णकः' चन्दनं 'पोतानि' लघुबालकयोग्यानि वस्त्रखण्डानि, आदिशब्दात्कण्डकादिपरिग्रहः, एतानि कार्ये कारणोपचारादात्मद्रव्यक्रीतानि, किमुक्तं भवति?—निर्माल्यादिप्रदानेन परमावर्ज्य यत्ततो भक्तादि गृह्यते तदात्मद्रव्यक्रीतमिति । अत्र दोषानाह—'गेलन्ने' इत्यादि, निर्माल्यप्रदानानन्तरं यदि कथमपि दैवयोगतो ग्लानता भवति तर्हि 'प्रवचनस्योड्डाहः' साधुनाऽहं ग्लानीकृत इत्यादि प्रजल्पनतः शासनस्य मालिन्योत्पत्तेः, अथ कथमपि 'प्रगुणः' नीरोगो भवति तर्हि स सर्वदा सर्वजनसमक्षं चटुकारी भवति, यथाऽहं साधुना प्रगुणीकृतोऽतिशयी चासौ साधुः सकलज्ञातव्यकुशलः परहितनिरत इत्यादि समक्षं परोक्षं वा सदैव प्रशंसां करोति, तथा च सत्यधिकरणं-भूयस्तस्याधिकरणप्रवृत्तिः, तादृशी हि तस्य प्रशंसामाकर्ण्यान्योऽन्यः समागत्य तं साधुं निर्माल्यगन्धादि याचते, ततस्तत्प्रार्थनापरवशाः अधिकरणमपि समारभते । सम्प्रति परभावक्रीतं विवृण्वन्नाह—

वइयाइ मंखमाई परभावकयं तु संजयट्ठाए । उप्पायणा निमंतण कीडगडं अभिहडे ठविए ॥ ३०९ ॥

व्याख्या—'व्रजिका' लघुगोकुलम्, उपलक्षणमेतत्, तेन पत्तनादिपरिग्रहः, तत्र व्रजिकादौ 'मङ्खादिः' मङ्खः-कैदारको यः पटमुपदर्श्य लोकमावर्जयति, आदिशब्दात्तथाविधान्यपरिग्रहः, भक्तिवशात् संयतार्थं यद् घृतदुग्धादेरुत्पादनं करोति कृत्वा च निमन्त्रयति तत्परभावक्रीतं, परेण-मङ्खादिना संयतार्थं भावेन-स्वपटप्रदर्शनादिरूपेण क्रीतं परभावक्रीतम्, इत्थंभूते च परभावक्रीते त्रयो दोषाः, एकं तावत्क्रीतं, द्वितीयमन्यस्मादन्यस्माद्गृहादानीतमित्यभ्याहृतम्, आनीयानीय चैकत्र साधुनिमित्तं स्थाप्यत इति स्थापितं, तस्मात्तादृशमपि साधूनां न कल्पते । एतदेव गाथाद्वयेन स्पष्टयन्नाह—

सागारि मंख छंदण पडिसेहो पुच्छ बहु गए वासे । कयरिं दिसिं गमिरसह ? अमुइं तहिं संथवं कुणइ ॥ ३१० ॥
दिज्जंते पडिसेहो कज्जे घेत्थं निमंतणं जइणं । पुव्वगय आगएसुं संछुहई एगगेहंमि ॥ ३११ ॥

व्याख्या—शालिग्रामो नाम ग्रामः, तत्र देवशर्माभिधानो मङ्खः, तस्य च गृहैकदेशे कदाचित् केचित् साधवो वर्षाकालमवस्थिताः, स च मङ्खस्तेषां साधूनामनुष्ठानमरक्तद्विष्टतां चोपलभ्यातीव भक्तिपरीतो बभूव, प्रतिदिवसं च भक्तादिना निमन्त्रयति, साधवश्च शय्यातरपिण्डोऽयमिति प्रतिषेधन्ति, ततः स चिन्तयामास—यथैते मम गृहे भक्तादि न गृह्णन्ति यदि पुनरन्यत्र दापयिष्यामि तथापि न ग्रहीष्यन्ति, तस्माद्वर्षाकालानन्तरं यत्रामी गमिष्यन्ति तत्राग्रे गत्वा कथमप्येतेभ्यो ददामीति, ततः स्तोकशेषे वर्षाकाले साधवस्तेन पप्रच्छिरे—यथा भगवन् ! वर्षाकालानन्तरं कस्यां दिशि गन्तव्यं ?, ते च यथाभावं कथयामासुः—यथाऽमुकस्यां दिशि, ततः स तस्यामेव दिशि क्वचिद्गोकुले निजपटमुपदर्श्य वचनकौशलेन लोकमावर्जितवान्, लोकश्च तस्मै घृतदुग्धादिकं दातुं प्रावर्त्तिष्ट, ततः स बभाण—यदा याचिष्ये (याचे) तदा दातव्यमिति, साधवश्च वर्षाकालानन्तरं यथाविहारक्रमं तत्राजग्मुः, तेन चात्मानमज्ञापयता पूर्वप्रतिषिद्धघृतदुग्धादिकं प्रतिगृहं याचित्वैकत्र च गृहे संमील्य मुक्तं, ततः साधवो निमन्त्रिताः, तैश्च यथाशक्ति छद्मस्थदृष्ट्या परिभावितं, परं न लक्षितं, ततः शुद्धमितिकृत्वा गृहीतं, न च तेषां तथा गृह्णतां कश्चिद्दोषः, यथाशक्ति परिभावनेन भगवदाज्ञाया आराधितत्वात्, यदि पुनरित्थंभूतं कथमपि ज्ञायते तर्हि नियमतः परिहर्त्तव्यं, क्रीताभ्यवहृतस्थापनारूपदोषत्रयसद्भावादिति । सूत्रं सुगमं, नवरं 'सागारिकः' शय्यातरः 'संस्तवः' परिचयः, निजपटप्रदर्शनेन लोकावर्जनमिति तात्पर्यार्थः । तदेवमुक्तं परभावक्रीतं, सम्प्रत्यात्मभावक्रीतं स्पष्टयन्नाह—

धम्मकह वाय खमणं निमित्त आयावणे सुयट्ठाणे । जाई कुल गण कम्मे सिप्पम्मि य भावकीयं तु ॥ ३१२ ॥

किं वा कहिज्ज छारा दगसोयरिआ व अहवऽगारत्था । किं छगलगगलवलया मुंडकुडुंबीव किं कहए? ॥ ३१४ ॥

व्याख्या—यो जगति निपुणो धर्मकथाकथकः श्रूयते स किं त्वम्? इति पृष्ट एवमुत्तरमाह—किं 'क्षाराः' क्षारावगुण्डितवपुषः कथयेयुः?, नैव ते कथयन्ति, किं वा दकशौकरिका? दकं—जलं तस्य निरन्तरं विनाशकतया शौकरिका इव पापर्द्धिकारिण इव वा दकशौकरिकाः—साङ्ख्याः, किं वा 'अगारस्थाः' गृहस्थाः शास्त्राध्ययनाध्यापनविकलाः?, यद्वा किं छगलकस्य—पशोर्गलं—ग्रीवां वलयन्ति—मोटयन्ति ये ते छगलकगलवलकाः, यदिवा किं मुण्डाः सन्तो ये कुटुम्बिनः शौद्धोदनीयास्ते कथयेयुः?, नैव ते कथयन्ति, किन्तु यतय एव, तत एवमुक्ते श्रावकाश्चिन्तयन्ति—नूनं स एवायं धर्मकथाकथक इत्यादि तदेव शेषं द्रष्टव्यं । तदेवं धर्मकथाद्वारं व्याख्याय शेषाण्यतिदेशेन व्याख्याति—

एमेव वाइ खमए निमित्तमायावगम्मि य विभासा । सुयठाणं गणिमाई अहवा वाणायरियमाई ॥ ३१५ ॥

व्याख्या—यथा धर्मकथाकथके विभाषा—भावना कृता 'एवमेव' अनेनैव प्रकारेण 'वादिनि' क्षपके निमित्तज्ञे आतापके च विभाषा कर्त्तव्या, यथा वादेनाक्षिप्तं याचते, यद्वा—ये वादिनः श्रूयन्ते ते किं यूयम्? इति प्रश्ने प्रायो यतय एव वादिनो भवन्तीति ब्रूते, यद्वा—मौनेनावतिष्ठते, यद्वा—किं भस्मावगुण्ठितवपुषः?, किं वा दकशौकरिका यदिवा धिग्जातीया यद्वा शौद्धोदनीया वादमेवं दद्युः, नैव ते ददति किन्तु यतयः, एवमुक्ते ते एवं परिजानते—यथा त एवामी, ततो विशिष्टमाहारादिकं तस्मै वितरन्ति, तच्च तथा प्रभूतं लभ्यमानमात्मभावक्रीतमवसेयं । तथा श्रुतस्थानं—गण्यादि, तत्र 'गणित्वम्' आचार्यत्वम् आदिशब्दात् उपाध्यायत्वादिपरिग्रहः, यद्वा वाचना-

चार्यत्वं, आदिशब्दात् प्रवर्त्तकत्वादिपरिग्रहः, तत्र भक्ताद्यर्थमाचार्या वयमुपाध्याया वयमित्यादि जनेभ्यः प्रकाशयति येन जना आचार्य-त्वादिकमवगम्य प्रभूततरं वितरन्ति, यद्वा—ये आचार्या महाविद्वांसः श्रूयन्ते ते किं यूयम्? इत्यादि तथैव भावनीयं, जात्यादिकं स्वेत-दर्थं कथयति येन समानं जात्यादिकमुत्कृष्टं च शिल्पादि ज्ञात्वा प्रभूतं प्रयच्छन्ति, तच्च तथा प्रभूतं लभ्यमानमात्मभावक्रीतं। तदेवमुक्तं क्रीतद्वारं, सम्प्रति प्रामित्यद्वारमाह—

पामिच्चंपि य दुविहं लोइय लोगुत्तरं समासेण। लोइय सज्झिलगाई लोगुत्तर वत्थमाईसु ॥ ३१६ ॥

व्याख्या—प्रामित्यमपि समासेन 'द्विविधं' द्विप्रकारं, तद्यथा—लौकिकं लोकोत्तरं च, तत्र लोके भवं लौकिकं, तच्च साधुविषयं 'सज्झिलगाई' सज्झिलगा—भगिनी, आदिशब्दाद्भ्रात्रादिपरिग्रहः तस्मिन्, किमुक्तं भवति?—भगिन्यादिभिः क्रियमाणं द्रव्यमिति, अत्र च भगिनीशब्देन कथानकं सूचितं, तदग्रे स्वयमेव वक्ष्यति, लोकोत्तरं प्रामित्यं 'वस्त्रादिषु' वस्त्रादिविषयं साधूनामेव परस्परमवसेयम्। इह 'लौकिकं भगिन्यादा' वित्युक्तं, तत्र भगिन्युदाहरणमेव गाथात्रयेण प्रकटयति—

सुयअभिगमनाय विही बहि पुच्छा एग जीवइ ससा ते। पविसण पाग निवारण उच्छिदण तेल्ल जइदाणं ॥३१७॥

अपरिमिय नेहवुड्ढी दासत्तं सो य आगओ पुच्छा। दासत्तकहण मा रुय अचिरा मोएमि एत्ताहे ॥ ३१८॥

भिक्खदगसमारंभे कहणाउट्टो कहिंति वसहिंत्ति। संवेया आहरणं विसज्जु कहणा कइवया उ ॥ ३१९ ॥

व्याख्या—कोशलाविषये कोऽपि ग्रामस्तत्र देवराजो नाम कुटुम्बी, सारिकाभिधा तस्य भार्या, तस्याश्च सम्मतप्रमुखा बहवः

सुताः, सम्मतिप्रभृतयश्च प्रभूता दारिकाः, तच्च सकलमपि कुटुम्बं परमश्रावकं, तथा तस्मिन्नेव ग्रामे शिवदेवो नाम श्रेष्ठी, तस्य भार्य शिवा, अन्यदा च समुद्रघोषाभिधाः सूरयः समागच्छन्, तेषां समीपे जिनप्रणीतं धर्ममाकर्ण्य जातसंवेगः सम्मतो दीक्षां गृहीतवान्, कालक्रमेण च गुरुचरणप्रसादतोऽतावे गीतार्थः समजनि । स चान्यदा चिन्तयामास—यदि मदीयः कोऽपि प्रव्रज्यां गृह्णाति ततः शोभनं भवति, इदमेव हि तात्त्विकमुपकारकरणं यत्संसारार्णवादुत्तारणमिति, तत एवं चिन्तयित्वा गुरूनापृच्छ्य निजबन्धुग्रामे समागमत्, तत्र च बहिः प्रदेशे कमपि परिणतवयसं पृष्टवान् पुरुषं—यथाऽत्र देवराजाभिधस्य कुटुम्बिनः सत्कः कोऽपि विद्यते ? इति, स प्राह—मृतं सर्वमपि तस्य कुटुम्बं केवलमेका सम्मत्यभिधा विधवा पुत्रिका जीवतीति, ततः स तस्या गृहे जगाम, सा च भ्रातरमायान्तं दृष्ट्वा मनसि बहुमानमुद्वहन्ती वन्दित्वा कञ्चित्कालं पर्युपास्य च तन्निमित्तमाहारं पक्तुमुपतस्थे, साधुश्च तां निवारितवान्—यथा न कल्पतेऽस्माकमस्मन्निमित्तं किमपि कृतमिति, ततो भिक्षावेलायां सा दुर्गतत्वेनान्यत्र क्वचिदपि तैलपात्रमप्यलभमाना कथमपि शिवदेवाभिधस्य वणिजो विपणेस्तैलपलिकाद्वयं दिने दिने द्विगुणवृद्धिरूपेण कलान्तरेण समानीय भ्रात्रे दत्तवती, भ्रात्रा च तं वृत्तान्तमजानता शुद्धमिति ज्ञात्वा प्रतिजगृहे, सा च तद्दिनं भ्रातुः सकाशे धर्मं श्रुतवती, तेन न पानीयानयनादिना तत्तैलपलिकाद्वयं प्रवेशयितुं प्रपारितवती, द्वितीये च दिने भ्राता (यथा) विहारक्रमं गतः, ततस्तस्मिन्नपि दिने तद्वियोगशोकाकीर्णमानसतया न तत्तैलपलिकाद्वयं द्विगुणीभूतं प्रवेशयितुं शक्तवती, तृतीये च दिने कर्षद्वयमृणे जातं तच्चातिप्रभूतत्वान्न प्रवेशयितुं शक्तम्, अपिच भोजनमपि पानीयानयनादिना कर्त्तव्यं, ततो भोजनायैव यत्नविधौ सकलमपि दिनं जगामेति न ऋणं प्रवेशयितुं शक्नोति, ततो दिने दिने द्विगुणवृद्ध्या प्रवर्द्धमानमृणमपरिमितघटप्रमाणं जातं, ततः श्रेष्ठिना सा बभणे—यथा मम तैलं देहि यद्वा मे दासी भव, ततः सा तैलं दातुमशक्नुवती दासत्वं प्रतिपेदे, कियत्सु च वर्षेष्वतिक्रान्तेषु भूयो-

ऽपि सम्मताभिधः साधुस्तस्मिन्नेव ग्रामे यथाविहारक्रममागमत, सा च भगिनी स्वगृहे न दृष्टा, तत आगता सती पप्रच्छे, तया च प्राचीनः सर्वोऽपि व्यतिकरस्तस्मै न्यवेदि यावद्दासत्वं शिवदेवगृहे जातमिति, निवेद्य च स्वदुःखं रोदितुं प्रवृत्ता, ततः साधुरवोचत्—मा रोदी-रचिरादहं त्वां मोचयिष्यामि, ततस्तस्या मोचनोपायं चिन्तयन् प्रथमतः शिवदेवस्यैव गृहे प्रविवेश, शिवा च तस्य भिक्षादानार्थं जलेन हस्तौ प्रक्षालयितुं लग्ना, तां च साधुर्निवारयामास, यथैवमस्माकं न कल्पते भिक्षेति, ततः समीपदेशवर्त्ती श्रेष्ठी प्रोवाच—कोऽत्र दोषः ?, ततः साधुः कायविराधनादीन् दोषान् यथागमं सविस्तरमचीकथत् ततः स आदृतो भणति यथा भगवन् ! कुत्र युष्माकं वसतिर्येन तत्रागता वयं धर्मं शृणुमः ततः साधुरवादीत्—नास्ति मेऽद्यापि प्रतिश्रयः, ततस्तेन निजगृहैकदेशे वसतिरदायि, प्रतिदिनं च धर्मं शृणोति, सम्यक्त्वमणुव्रतानि च प्रतिपन्नानि, साधुश्च कदाचनापि वासुदेवादिपूर्वपुरुषाचीर्णाननेकानभिग्रहान् व्यावर्णयामास, यथा वासुदेवेनायमभिग्रहो जगृहे—यदि मदीयः पुत्रोऽपि प्रव्रज्यां जिघृक्षति ततोऽहं न निवारयामीत्यादि, एवं च श्रुत्वा शिवदेवोऽप्यभिग्रहं गृहीतवान्—यदि भगवन् ! मदीयोऽपि कोऽपि प्रव्रज्यां प्रतिपद्यते ततोऽहं न निवारयामीति, अत्रान्तरे च शिवदेवस्य तनयो ज्येष्ठः सा च साधुभगिनी सम्मतिः प्रव्रज्यां ग्रही-तुमुपतस्थे, श्रेष्ठिना च तौ द्वावपि विसर्जितौ, ततः प्रव्रज्यां प्रतिपन्नाविति । सूत्रं सुगमं, केवलं ‘श्रुताधिगमज्ञातविधिः’ श्रुताधिगमात् ज्ञातो विधिः—क्रियाविधिर्येन स तथा, अत्राह—नन्वेतत्प्रामित्यं साधुना विशेषतो ग्रहीतव्यं, परम्परया प्रव्रज्याकारणत्वात्, अत आह—‘कइवया उ’ एवंविधा गीतार्था विशिष्टश्रुतविदो देशनाविधिनिपुणाः कतिपया एव भवन्ति, न भूयासः, कतिपयानामेव च प्रव्रज्यापरि-णामः, ततः प्रामित्यं दोषायैव । तदेवं तैलविषये प्रामित्ये दोष उक्तः, सम्प्रत्यतिदेशेन वस्त्रादिविषये दोषानभिधित्सुराह—

एए चेव य दोसा सविसेसयरा उ वत्थपाएसुं । लोइयपामिच्चेसुं लोगुत्तरिया इमे अन्ने ॥ ३२० ॥

व्याख्या—'एते एव' दासत्वादयो दोषा वस्त्रपात्रविषयेषु लौकिकेषु प्रामित्येषु सविशेषतरा निगडादिनियन्त्रणपुरस्सरा द्रष्टव्याः, 'लोकोत्तरिकाः' लोकोत्तरप्रामित्यविषयाः पुनरिमेऽन्ये दोषाः, तानेवाह—

मइलिय फालिय खोसिय हियनट्ठे वावि अन्न मग्गंते। अवि सुंदरेवि दिण्णे दुक्कररोई कलहमाई ॥ ३२१ ॥

व्याख्या—इह द्विधा लोकोत्तरं प्रामित्यं—कोऽपि कस्यापि सत्कमेवं वस्त्रादि गृह्णाति यथा कियद्दिनानि परिभुज्य पुनरपि ते समर्पयिष्यामि, कोऽपि पुनरेवम्-एतावद्दिनानामुपरि तवैतत्सदृशमपरं वस्त्रादि दास्यामि, तत्र प्रथमे प्रकारे 'मलिनिते' शरीरादिमलेन क्लेदिते यदिवा पाटितेऽथवा 'खोसिते' जीर्णप्राये कृते यदि वा चौरादिना हृते यद्वा—क्वापि मार्गपतिते कलहादयो दोषाः। द्वितीये च प्रकारेऽन्यद्वस्त्रादिकं याचमानो याचमानस्य 'अपिः' सम्भावनायां 'सुन्दरेऽपि' पूर्वभुक्ताद्वस्त्रादेर्विशिष्टतरेऽपि दत्ते कोऽपि दुष्कररुचिर्भवति, महता कष्टेन तस्य रुचिरापादयितुं शक्यते, ततस्तमधिकृत्य कलहादयो दोषाः सम्भवन्ति, तस्माल्लोकोत्तरमपि प्रामित्यं न कर्त्तव्यम्। अत्रैवापवादमाह—

उच्चत्ताए दाणं दुल्लभ खग्गूड अलस पामिच्चे। तंपि य गुरुस्स पासे ठवेइ सो देइ मा कलहो ॥ ३२२ ॥

व्याख्या—इह दुर्लभे वस्त्रादौ सीदतः साधोर्यदि वस्त्रादिकमपरेण साधुना दातुमिष्यते तर्हि तस्य 'उच्चतया' मुधिकतया दानं कर्त्तव्यं, न प्रामित्यकरणेन, तथा यः 'खग्गूडः' कुटिलो वैयावृत्यादौ न सम्यग् वर्त्तते योऽपि चालसः तौ दुर्लभवस्त्रादिदानप्रलोभनेनापि वैयावृत्यं कार्येते, ततस्तद्विषयं प्रामित्यं सम्भवति, तत्रापि तद्दीयमानं वस्त्रादिकं दायको गुरोः पार्श्वे स्थापयेत्, न स्वयं दद्यात्, ततः स गुरुर्ददाति, मा भूदन्यथा तयोः परस्परं कलह इतिकृत्वा ॥ उक्तं प्रामित्यद्वारम्, अधुना परावर्त्तितद्वारमभिधित्सुराह—

न मम गृहे साधुरपि भ्राता समुत्तीर्ण इति परिभवं मंस्यते इति, ततोऽनुकम्पया तस्या एव गृहे प्रविवेश, भिक्षावेलायां च तया लक्ष्म्या चिन्तितं—यथैकं तावदयं भ्राता द्वितीयं साधुः तृतीयं प्राघूर्णकः, मम च गृहे कोद्रवकूरः, ततः कथमसावस्मै दीयते?, शाल्योदनश्च मम गृहे न विद्यते, ततो भ्रातृजायाया वन्धुमत्याः सकाशात् कोद्रवौदनपरावर्त्तनेन शाल्योदनमानीय ददामीति तथैव कृतम्, अत्रान्तरे च देवदत्तो भोजनार्थं स्वगृहमागतः, वन्धुमत्या च पप्रच्छे यथाऽद्य कोद्रवौदनो जेमितव्यः, तेन चाविज्ञातपरिवर्त्तनवृत्तान्तेन चिन्तितं—यथाऽनया कृपणतया कोद्रवौदनो राद्धो न शाल्योदनः, ततस्तां ताडयितुमारेभे, सा च ताड्यमाना प्राह—किं मां ताडयसि ?, तवैव भगिनी कोद्रवौदनं मुक्त्वा शाल्योदनं नीतवती, धनदत्तस्यापि च भोजनार्थमुपविष्टस्य यः शाल्योदनः क्षेमङ्करस्य दीयमान उद्धरितः स गौरवेण लक्ष्म्या परिवेषितः, ततस्तेन सा पृष्टा—कुतोऽयं शाल्योदनः ?, ततः कथितः सर्वोऽपि तया वृत्तान्तः, श्रुत्वा च तं वृत्तान्तं चुकोप धनदत्तो—यथा हा ! पापे ! किमिति त्वया मानमेकं शालेः पक्त्वा साधवे शाल्योदनो न दत्तो यत्परगृहादानयनेन मम मालिन्यमापादितं, ततस्तेनापि सा ताडिता, साधुना चायं वृत्तान्तो गृहद्वयवर्त्ती सर्वोऽपि जनपरम्परातः शुश्रुवे, ततो निशि सर्वाण्यपि तानि प्रतिबोधितानि, यथेत्थमस्माकं न कल्पते परमजानता मया गृहीतम्, अत एव च कलहादिदोषसम्भवाद्भगवता प्रतिषिद्धं, ततो जिनप्रणीतं धर्मं सविस्तरं कथितवान्, जातः सर्वेषामपि संवेगो, दत्ता च दीक्षा तेषां सर्वेषामिति। सूत्रं सुगमं, नवरम् 'अवरुप्परसज्झिलगा' इति लक्ष्मीदेवदत्तौ वन्धुमतीधनदत्तौ परस्परं 'सज्झिलगौ' भ्रातरौ, ते च 'द्वे अपि' लक्ष्मीवन्धुमत्यौ 'अन्नमन्नेणं'ति अन्योऽन्यमपि सम्बद्धे देवदत्तस्य भगिनी लक्ष्मीर्धनदत्तेन धनदत्तस्यापि भगिनी वन्धुमती देवदत्तेन परिणीता इत्यर्थः, 'पोग्गलिय'त्ति पौद्गलिकस्य शाल्योदनस्य 'संयतार्थं' क्षेमङ्करसाधुनिमित्तं परिवर्त्तनं कृतं, ततः 'संखडं' कलहस्ततः 'बोधिः' प्रव्रज्या, अस्या

यस्य सत्कं तद्वस्त्रादि तेन गुरुपादमूले तस्य वस्त्रादेः स्थापनं कर्त्तव्यं, गुरुपादमूले मोक्तव्यमित्यर्थः, ततो वृत्तान्तः कथनीयः, वृत्तान्ते च कथिते सति स गुरुर्ददाति 'अन्यथा' गुरुपादमूलस्थापनाद्यभावे 'कलहः' परस्परं राटिः सम्भवतीति । उक्तं परिवर्तितद्वारम्, अथाभ्याहृतद्वारमाह—

आइन्नमणाइन्नं निसीहऽभिहडं च नोनिसीहं च । निसिहाभिहडं ठप्पं वोच्छामी नोनिसीहं तु ॥ ३२९ ॥

व्याख्या—अभ्याहृतं द्विधा, तद्यथा—आचीर्णमनाचीर्णं च, तत्रानाचीर्णं द्विधा, तद्यथा—निशीथाभ्याहृतं नोनिशीथाभ्याहृतं च, तत्र निशीथम्—अर्द्धरात्रं तत्रानीतं किल प्रच्छन्नं भवति, एवं साधूनामपि यदविदितमभ्याहृतं तन्निशीथाभ्याहृतमिव निशीथाभ्याहृतं, तद्विपरीतं नोनिशीथाभ्याहृतं—यत्साधूनामभ्याहृतमिति विदितं भवति, तत्र निशीथाभ्याहृतं स्थाप्यम्, अग्रे वक्ष्यते इति भावः, सम्प्रति पुनर्वक्ष्यामि नोनिशीथाभ्याहृतं ॥ प्रतिज्ञातमेव निर्वाहयति—

सग्गाम परग्गामे सदेस परदेसमेव बोद्धव्वं । दुविहं तु परग्गामे जलथल नावोडु जंघाए ॥ ३३० ॥

व्याख्या—नोनिशीथाभ्याहृतं द्विविधं, तद्यथा—'स्वग्रामे' स्वग्रामविषयं 'परग्रामे' परग्रामविषयं, तत्र यस्मिन् ग्रामे साधुर्निवसति स किल स्वग्रामः, शेषस्तु परग्रामः, तत्र 'परग्रामे' परग्रामविषयमभ्याहृतं द्विविधं, तद्यथा—स्वदेशं परदेशं च, स्वदेशपरग्रामाभ्याहृतं परदेशपरग्रामाभ्याहृतं चेत्यर्थः । तत्र स्वदेशो यत्र देशे मण्डले साधुर्वर्त्तते, शेषस्तु परदेशः । एतद्द्विविधमपि प्रत्येकं द्विधा, तद्यथा—'जलथले'त्ति 'सूचनात्सूत्र'मितिकृत्वा जलपथेनाभ्याहृतं स्थलपथेनाभ्याहृतं च, तत्र जलपथेनाप्यभ्याहृतं द्विधा—नावा उडुपेन च, उपलक्षणमेतत्, तेन स्तोकजलसम्भावनायां जङ्घाभ्यामपि, तत्र नौः—तरिका उडुपः—तरणकाष्ठं तुम्बकादि चोडुपग्रहणेन गृहीतं द्रष्टव्यं, स्थलपथेनाप्यभ्या-

हृतं द्विधा, तद्यथा—जङ्घाभ्यां-पद्भ्याम्, उपलक्षणमेतत्, तेन गन्त्र्यादिना च ॥ तत्रामूनेव जलस्थलाभ्याहृतभेदान समपञ्चं विभावयन दोपान् प्रदर्शयति—

जंघा बाह तरीइ.व जले थले खंध आरखुरनिबद्धा । संजमआयविराहण तहियं पुण संजमे काया ॥ ३३१ ॥

अत्थाहगाहपंकामगरोहारा जले अवाया उ । कंटाहितेणसावय थलंमि एए भवे दोसा ॥ ३३२ ॥

व्याख्या—तत्र जलमार्गे स्तोकजलसम्भावनायां जङ्घाभ्याम् अस्ताघसम्भावनायां बाहुभ्यां यदिवा तरिकया, उपलक्षणमेतत्, उडुपेन चाभ्याहृतं सम्भवति, स्थलमार्गे तु स्कन्धेन यद्वा 'आरखुरनिबद्ध'त्ति अत्र तृतीयार्थे प्रथमा, ततोऽयमर्थः—आरकनिबद्धा गन्त्री तया खुरनिबद्धा रासभबलीवर्दादयस्तैः, अत्र च दोपाः संयमविराधनाऽऽत्मविराधना च, 'तत्र' संयमाऽऽत्मविराधनामध्ये संयमविपया विराधना जलमार्गे स्थलमार्गे च 'काया' अप्कायादयो विराध्यमाना द्रष्टव्याः । जलमार्गे आत्मविराधनामाह—'अत्थाह' इत्यादि, अत्र प्राकृतत्वात् कचिद्विभक्तिलोपः कचिद्विभक्तिपरिणामश्च, ततोऽयमर्थः—अस्ताघे पदादिभिरलभ्यमानेऽधोभूभागेऽधोनिमज्जनलक्षणोऽपायो भवति, तथा 'ग्राहेभ्यः' जलचरविशेषेभ्यः यद्वा 'पङ्कतः' कलरूपात् अथवा मकरेभ्यः, यदिवा 'ओहारे'त्ति कच्छपेभ्यः, उपलक्षणमेतत्, अन्येभ्यश्च पादबन्धकतन्त्वादिभ्यः 'अपाया' विनाशादयो दोपाः सम्भवन्ति । स्थलमार्गे आत्मविराधनामाह—'कंटे'त्यादि कण्टकेभ्यो यदिवाऽहिभ्यो यद्वा स्तेनेभ्योऽथवा श्वापदेभ्यः, उपलक्षणमेतत्, ज्वराद्युत्पादकपरिश्रमादिभ्यश्च 'स्थले' स्थलमार्गे एत एवापायरूपा दोपाः प्रतिपत्तव्याः ॥ उक्तमनाचीर्णं परग्रामाभ्याहृतं नोनिशीथं, सम्प्रति तदेव स्वग्रामाभ्याहृतं नोनिशीथं गाथाद्वयेनाह—

सग्गामेऽवि य दुविहं घरंतरं नोघरंतरं चेव । तिघरंतरा परेणं घरंतरं तं तु नायव्वं ॥ ३३३ ॥

नोघरंतरऽणेगविहं वाडगसाहीनिवेसणगिहेसु । काये खंधे मिम्मय कंसेण व तं तु आणेज्जा ॥ ३३४ ॥

व्याख्या—'स्वग्रामेऽपि' स्वग्रामविषयमप्यभ्याहृतं द्विविधं, तद्यथा—गृहान्तरं नोगृहान्तरं च, तत्र त्रिगृहान्तरात् परेण—त्रीणि गृहाण्यन्तरं कृत्वा परतो यदानीतं तद्गृहान्तरं, एवं च सति किमुक्तं भवति ?—यद्गृहत्रयमध्यादानीयते उपयोगश्च त(य)त्र सम्भवति तदाचीर्णमवसेयं, नोगृहान्तरमनेकविधं, तच्च वाटकादिविषयं, तत्र 'वाटकः' परिच्छन्नः प्रतिनियतः सन्निवेशः 'साही' वर्त्तनी सैवैकाऽपान्तराले विद्यते न तु गृहान्तरमित्यर्थः 'निवेशनम्' एकनिष्क्रमणप्रवेशानि द्व्यादिगृहाणि 'गृहं' केवलं मन्दिरम्, एतच्च सकलमपि वाटकादिविषयमनाचीर्णमनुपयोगसम्भवे वेदितव्यं, तदपि च गृहान्तराख्यं नोगृहान्तराख्यं च नोनिशीथं स्वग्रामाभ्याहृतं प्रतिलाभयितुमीप्सितस्य साधोरुपाश्रयमानयेत् कापोत्या यदिवा स्कन्धेन, उपलक्षणमेतत्, तेन करादिना च, यदिवा मृन्मयेन भाजनेन यद्वा कांस्येन ॥

सम्प्रत्यस्यैव स्वग्रामविषयनोनिशीथाभ्याहृतस्य सम्भवमाह—

सुन्नं व असइ कालो पगयं व पहेणगं व पासुत्ता । इय एइ काइ घेत्तुं दीवेइ य कारणं तं तु ॥ ३३५ ॥

व्याख्या—इह साधुर्भिक्षामटन् कापि गृहे प्रविष्टः, परं तत्तदानीं 'शून्यं' बहिर्निर्गतमानुषमासीत्, यद्वाऽद्यापि तत्र राध्यते इति 'असन्' अविद्यमानो भिक्षाकालः, यदिवा तत्र प्रकृतं—गौरवार्हस्वजनभोजनादिकं वर्त्तते, न ततो तदानीं साधवे भिक्षा दातुं प्रपारिता, यदिवा विहृत्य साधोर्गतस्य पश्चात् 'प्रहेणकं' लाहनकमागतं, तच्चोत्कृष्टत्वात् किल साधवे दातव्यम्, अथवा तदा श्राविका 'प्रसुप्ता' शयि-

तेपामावसथे वीवाहः समजनि, वृत्ते च तस्मिन् प्रचुरं मोदकाद्युद्धरितं, ततस्तैरचिन्ति–यथैतत्साधुभ्यो दीयतां येन महत्पुण्यमस्माकमुपजायते, अथ च केचित्साधवो दूरेऽवतिष्ठन्ते, केचित्पुनः प्रत्यासन्नाः, परमन्तराले नदी विद्यते, ततस्तेऽप्यप्कायविराधनाभयतो नागमिष्यन्ति, आगता अपि च प्रचुरं मोदकादिकमवलोक्य कथ्यमानमपि शुद्धमाधाकर्मशङ्कया न ग्रहीष्यन्ति ततो यत्र ग्रामे साधवो निवसन्ति तत्रैव प्रच्छन्नं गृहीत्वा व्रजाम इति, तथैव च कृतं, ततो भूयोऽपि चिन्तयन्ति—यदि साधूनाहूय दास्यामस्ततोऽशुद्धमाशङ्क्य ते न ग्रहीष्यन्ति तस्मात् द्विजादिभ्योऽपि किमपि दद्मः, तच्च तथा दीयमानमपि यदि साधवो न प्रेक्षिष्यन्ते ततस्तदवस्थैव तेपामशुद्धाशङ्का भविष्यति ततो यत्रोच्चारादिकार्यार्थं निर्गताः सन्तः साधवः प्रेक्षन्ते तत्र दद्म इति, एवं च चिन्तयित्वा विवक्षिते कस्मिंश्चित्प्रदेशे कस्यचिद्देवकुलस्य बहिर्भागे द्विजादिभ्यः स्तोकं स्तोकं दातुमारब्धं, तत उच्चारादिकार्यार्थं विनिर्गताः केचन साधवो दृष्टाः, ततस्ते निमन्त्रिता यथा भोः ! साधवः ! अस्माकमुद्धरितं मोदकादि प्रचुरमवतिष्ठते ततो यदि युष्माकं किमप्युपकरोति तर्हि तत्प्रतिगृह्यतामिति, साधवोऽपि शुद्धमित्यवगम्य प्रत्यगृह्णन्, तैश्च साधुभिः शेपाणामपि साधूनामुपादेशि—यथाऽमुकस्मिन् प्रदेशे प्रचुरमेपणीयमशनादि लभ्यते, ततस्तेऽपि तद्ग्रहणाय समाजग्मुः, तत्र चैके श्रावकाः प्रचुरं मोदकादिकं प्रयच्छन्ति, अन्ये च मातृस्थानतो निवारयन्ति, यथैतावद्दीयतां माऽधिकं, शेपमस्माकं भोजनाय भविष्यति, अन्ये पुनस्तानेव निवारयतः प्रतिषेधयन्ति—यथा न कोऽप्यस्माकं भोक्ष्यते, सर्वेऽपि प्रायो भुक्ताः, ततः स्तोकमात्रेण किञ्चिदुद्धरितेन प्रयोजनं, तस्माद्यथेच्छं साधुभ्यो दीयतामिति । साधवश्च ये नमस्कारसहितप्रत्याख्यानास्ते भुक्ताः, ये च पौरुषीप्रत्याख्यानास्ते भुञ्जाना वर्त्तन्ते, ये चाजीर्णवन्तः पूर्वार्द्धादि प्रतीक्षमाणा वर्त्तन्ते ते नाद्यापि भुञ्जते, श्रावकाश्च चिन्तयामासुः—यथेदानीं साधवो भुक्ता भविष्यन्ति, ततो वन्दित्वा निजस्थानं व्रजाम इति, एवं चिन्तयित्वा

समधिकप्रहरवेलाया साधुवसतावागत्य नैषेधिक्यादिकां सकलामपि श्रावकक्रियां कृतवन्तः, ततो ज्ञातं यथाऽमी श्रावकाः परमविवेकिनो, ज्ञाताश्च परम्परया विवक्षितग्रामवास्तव्याः, ततः सम्यग्विमर्शतो निश्चितं—नूनमस्मन्निमित्तमेतत् स्वग्रामादभ्याहृतमिति, ततो यैर्भुक्तं तैर्भुक्तमेव, ये त्वद्यापि पूर्वार्द्धादि प्रतीक्षमाणा न भुञ्जते तैर्न भुक्तं, येऽपि च भुञ्जाना अत्रतिष्ठन्ते, तैरपि यः कवल उत्क्षिप्तः स भाजनेऽमुच्यत, यत्तु मुखे प्रक्षिप्तं नाद्यापि गिलितं तन्मुखाद्विनिःसार्य समीपस्थापिते मल्लके प्रचिक्षिपे, शेषं तु भाजनगतं सर्वमपि परिष्ठापितं, श्रावकाः श्राविकावर्गश्च सर्वोऽपि क्षमयित्वा स्वस्थानं जगाम, तत्र ये भुक्ता ये चार्द्धभुक्तास्ते[ऽपि] सर्वेऽप्यशठभावा इति शुद्धाः। सूत्रं सुगमं, केवलम् 'अइदूरजलंतरिय' त्ति केचिदतिदूरे केचिन्नद्याऽन्तरिताः॥ उक्तं परग्रामाभ्याहृतनिशीथम्, अथ स्वग्रामाभ्याहृतं तदेव गाथाद्वयेनाह—

लद्धं पहेणगं मे अमुगत्थगयाएँ संखडीए वा। वंदणगट्ठपविट्ठा देइ तयं पट्ठिय नियत्ता॥ ३४१॥

नीयं पहेणगं मे नियगाणं निच्छियं व तं तेहिं। सागारि सयज्झियं वा पडिकुट्ठा संखडे रुट्ठा॥ ३४२॥

व्याख्या—इह काचिदभ्याहृताशङ्कानिवृत्त्यर्थं किमपि गृहं प्रति प्रस्थिता, ततो निवृत्ता सति साधोः प्रतिलाभनायोपाश्रयं प्रविश्य साधुसम्मुखमेवमाह—भगवन्! प्रहेणकमिदममुकास्मिन् गृहे गतया लब्धं, यद्वा क्वापि सङ्खड्यां, सम्प्रति वन्दनार्थमत्र प्रविष्टा, ततो यदि युष्माकमिदमुपकरोति तर्हि प्रतिगृह्यतामिति तकदानीतं ददाति, यद्वा एवमाह—'निजकानां' स्वजनानामर्थाय प्रहेणकं मया स्वगृहात् नीतं, परं तैर्नेप्सितं, ततः स्वजनगृहात् प्रतिनिवृत्ता वन्दनार्थमत्रागतेति, ततस्तद्ददाति। यदिवा मायया काचिदभ्याहृतमानीय सागारिकां शय्यातरीं यद्वा 'सइज्झितं' वसतीप्रवेशनीं पूर्वगृहीतसङ्केतां यथा साधवः शृण्वन्ति तथा प्रवक्ति—गृहाणेदं प्रहेणकमिति, तया च मातृ-

स्थानतः प्रतिषिद्धा यथा त्वयाऽप्यमुकस्मिन् दिने मदीयं प्रहेणकं न जग्रहे ततोऽहमपि त्वदीयं न ग्रहीष्यामीत्येवं निषिद्धा, ततः साऽपि मातृस्थानतः किञ्चित्परुषं प्रत्युक्तवती, द्वितीययाऽपि तथैव भाषितं, तत एवं परस्परं 'संखडे' कलहे सति सा प्रहेणकनेत्री 'रुष्टा' रोषवती वन्दनार्थं वसतौ प्रविशति, ततोऽनन्तरवृत्तं वृत्तान्तं कथयित्वा तदानीं ददाति। उक्तं स्वग्रामाभ्याहृतमपि निशीथं, सम्प्रत्यनाचीर्णं निगमयन्नाचीर्णस्य भेदानाह—

एयं तु अणाइन्नं दुविहंपि य आहडं समक्खायं। आइन्नंपि य दुविहं देसे तह देसदेसे अ ॥ ३४३ ॥

व्याख्या—'एतत्' पूर्वोक्तमभ्याहृतं निशीथनोनिशीथभेदाद् यद्वा स्वग्रामपरग्रामभेदाद्द्विविधमप्याख्यातमनाचीर्णम्—अकल्पनीयं, सम्प्रत्याचीर्णं वक्ष्ये, तदपि द्विविधं, तद्यथा—देशे देशदेशे च। सम्प्रति देशस्य देशदेशस्य च स्वरूपमाह—

हत्थसयं खलु देसो आरेणं होइ देसदेसो य। आइन्नंमि(उ)तिगिहा ते च्चिय उवओगपुव्वागा॥ ३४४ ॥

व्याख्या—'हस्तशतं' हस्तशतप्रमितं क्षेत्रं देशः, हस्तशतादाराद्धस्तशतमध्ये इत्यर्थः, देशदेशः, तत्र हस्तशतप्रमाणे आचीर्णे यदि गृहाणि त्रीणि भवन्ति नाधिकानि ततः कल्पते, तान्यपि चेद्गृहाण्युपयोगपूर्वकाणि भवन्ति, उपयोगस्तत्र दातुं शक्यत इत्यर्थः, ततः कल्पते नान्यथेति। सम्प्रति गृहत्रयव्यतिरेकेण हस्तशतादिसम्भवं तद्विषयं कल्प्याकल्प्यविधिं चाह—

परिवेसणपंतीए दूरपवेसो य घंघसालगिहे। हत्थसया आइन्नं गहणं परओ उ पडिकुट्ठं ॥ ३४५ ॥

व्याख्या—परिवेष्यते—भोजनं दीयते येभ्यस्ते परिवेषणाः—भुञ्जानाः पुरुषास्तेषां पङ्क्तिः—श्रेणिस्तस्यां, तत्र ह्येकस्मिन् पर्यन्ते

साधुसङ्घाटको वर्त्तते द्वितीये तु देयं तिष्ठति, तत्र च स्पृष्टास्पृष्टभयादिना गन्तुं न शक्यते, एवमुत्तरयोरपि पदयोर्भावनीयं, ततः परिवेषणपङ्क्त्यां, यद्वा 'दूरप्रवेशे' प्रलम्बगमनमार्गे छिण्डिकादौ, यदिवा घट्टशालागृहे हस्तशतादानीतस्य ग्रहणमाचीर्णं, कल्पत इत्यर्थः, परतस्त्वानीतस्य ग्रहणं 'प्रतिकुष्टं' निराकृतं तीर्थकरादिभिः ॥ सम्प्रत्यस्यैवाचीर्णस्य भेदान् प्रदर्शयति—

उक्कोस मज्झिम जहन्नगं तु तिविहं तु होइ आइन्नं । करपरियत्त जहन्न सयमुक्कोसं मज्झिमं सेसं ॥ ३४६ ॥

व्याख्या—त्रिविधमाचीर्णमभ्याहृतं, तद्यथा—उत्कृष्टं मध्यमं जघन्यं च, तत्र यदा ऊर्द्धोपविष्टा वा कथमपि स्वप्रयोगेन मुष्टिगृहीतेन मण्डकादिना, यदिवा स्वापत्यादिपरिवेषणार्थमोदनभृतया करोटिकयोत्पाटितया व्यवतिष्ठते, अत्रान्तरे च कथमपि साधुरागच्छति भिक्षार्थं, तस्मै च यदि करस्थं ददाति तदा करपरिवर्त्तनमात्रं जघन्यमभ्याहृतमाचीर्णं, हस्तशतादभ्याहृतमुत्कृष्टं, शेषं तु हस्तशतमध्यवर्त्ति मध्यमं । तदेवमुक्तमभ्याहृतद्वारम्, अथोद्भिन्नद्वारमाह—

पिहिउब्भिन्नकवाडे फासुय अप्फासुए य बोद्धव्वे । अप्फासु पुढविमाई फासुय छगणाइदद्दरए ॥ ३४७ ॥

व्याख्या—उद्भिन्नं द्विधा, तद्यथा—पिहितोद्भिन्नं कपाटोद्भिन्नं च, तत्र यत् कुतुपादेः स्थगितं मुखं साधूनां तैलघृतादिदानार्थमुद्भिद्य तैलादि साधुभ्यो दीयते तद्दीयमानं तैलादि पिहितोद्भिन्नं, पिहितमुद्भिन्नं यत्र तत् पिहितोद्भिन्नमिति व्युत्पत्तेः, तथा यत् पिहितं कपाटमुद्भिद्य—उद्घाट्य साधुभ्यो दीयते तत् कपाटोद्भिन्नं, व्युत्पत्तिः प्रागिव, तत्र पिहितोद्भिन्ने यत्पिधानं तद्द्विधा, तद्यथा—प्रासुकमप्रासुकं च, सचेतनमचेतनं चेत्यर्थः, तत्र 'अप्रासुकं' सचित्तपृथिव्यादिमयं, 'प्रासुकं' छगणादिदर्दरकं, तत्र छगणं—गोमयः, आदिशब्दाद्भस्मादिपरिग्रहः, दर्दरकः—मुखबन्धनं वस्त्रखण्डम् । अत्र पिहितोद्भिन्ने कपाटोद्भिन्ने च दोषानभिधित्सुराह—

उब्भिन्ने छक्काया दाणे कयविक्कए य अहिगरणं । ते चेव कवाडंमिवि सविसेसा जंतमाईसु ॥ ३४८ ॥

व्याख्या—उद्भिन्ने–पिहितोद्भिन्ने षट् कायाः—उद्भेदकाले षट् कायाः पृथिवीकायादयो विराध्यन्ते, ततः प्रथमतः साधुनिमित्तं कुतुपादिमुखे उद्भिन्ने सति पुत्रादिभ्यस्तैलादिप्रदाने, तथा क्रयविक्रये–क्रये विक्रये चाधिकरणं—पापप्रवृत्तिरुपजायते, तथा एत एव षट्कायविराधनादयो दोषाः 'कपाटेऽपि' कपाटोद्भिन्नेऽपि सविशेषास्तु 'यन्त्रादिषु' यन्त्ररूपकपाटादिषु द्रष्टव्याः, तत्र यान्यतीव सम्पुटमागतानि कुञ्चिकया चोद्घाट्यन्ते यानि च दर्दरकोपरि पिट्टणिकाया एकदेशवर्त्तीनि मालप्रवेशरूपद्वारे तानि यन्त्ररूपकपाटानि आदिशब्दात्परिघादिग्रहः । सम्प्रत्येनामेव गाथां व्याचिख्यासुः प्रथमतः 'उब्भिन्ने छक्काया' इत्यवयवं व्याख्यानयन् गाथाद्वयमाह—

सच्चित्तपुढविलित्तं लेलु सिलं वाऽवि दाउसोलित्तं । सच्चित्तपुढविलेवो चिरंपि उदगं अचिरलित्ते ॥ ३४९ ॥

एवं तु पुव्वलित्ते काया उब्भिंपणेऽवि ते चेव । तिम्मेउं उवलिंपइ जउमुद्दं वावि तावेउं ॥ ३५० ॥

व्याख्या—इह कुतुपादिमुखं दर्दरकोपरि कश्चित् 'लेलुं' लेष्टुं शिलां वा—पाषाणखण्डं प्रक्षिप्य जलार्द्रीकृतसचित्तपृथिवीकायलिप्तं भवति, तत्र सचित्तपृथिवीलेपः सचित्तः सन् चिरकालमप्यवतिष्ठते, उदकं तु 'अचिरलिप्ते' अचिरकाललिप्ते सम्भवति, किमुक्तं भवति ?—यदि चिरकालसचित्तपृथिवीकायलिप्तमुद्भिद्यते तर्हि सचित्तपृथिवीकायविनाशोऽचिरलिप्ते तूद्भिद्यमानेऽप्कायस्यापि विनाशः, अचिरलिप्तमप्यत्रान्तर्मुहूर्त्तकालस्य मध्यवर्त्ति द्रष्टव्यम्, अन्तर्मुहूर्त्तानन्तरं पृथिवीकायशस्त्रसम्पर्केन उदकमचित्तीभवति, ततो न तद्विराधनादोषः, उपलक्षणमेतत्, तेन त्रसादेरपि तदाश्रितस्य विनाशसम्भवो द्रष्टव्यः । एवम्—अनेन प्रकारेण पूर्वलिप्ते साध्वर्थमुद्भिद्य-

माने दोषा उक्ताः, एत एव पृथिवीकायादिविराधनादोषा उपलिप्यमानेऽपि कुतुपादिमुखात्तैलघृतादिकं साधवे दत्त्वा शेषस्य रक्षणार्थं
भूयोऽपि कुतुपादिमुखे स्थग्यमाने द्रष्टव्याः, तथाहि-भूयोऽपि कुतुपादिमुखं सचित्तपृथिवीकायेन जलार्द्रीकृतेनोपलिप्यति, ततः पृथिवी-
कायविराधनाऽप्कायविराधना च, पृथिवीकायमध्ये च मुद्गादयः कीटिकादयश्च सम्भवन्ति ततस्तेषामपि विराधना। तथा कोऽप्यभिज्ञानार्थं
जतु तापयित्वा कुतुपादिमुखस्योपरि जतुमुद्रां ददाति, तदा तेजःकायविराधनाऽपि, यत्राग्निस्तत्र वायुरिति वायुकायविराधना च, ततः
पिहितोद्भिन्ने षट्कायविराधना। अमुमेवार्थं स्पष्टं भावयति—

जह चेव पुव्वलित्ते काया दाउं पुणोऽवि तह चेव। उवलिप्पंते काया मुइअंगाई नवरि छट्ठे ॥ २५१ ॥

व्याख्या—यथा चैव पूर्वलिप्ते 'कायाः' पृथिवीकायादयो विराध्यन्ते तथा साधुभ्यस्तैलादिकं दत्त्वा भूयोपि कुतुपादिमुखे
उपलिप्यमाने काया विराध्यन्ते, नवरं षष्ठे काये त्रसकायरूपे विराध्यमाना जन्तवः पृथिव्याश्रिताः 'मुइंगादयः' पिपीलिकाकुन्थ्वादयो
द्रष्टव्याः। साम्प्रति 'दाणे कयविक्कए य' इत्यवयवं व्याचिख्यासुराह—

उग्घाडिए तंमि करे अवस्सं, सविक्कयं तेण किणाइ अन्नं॥ २५२॥
परस्स तं देइ स एव गेहे, तेल्लं व लोणं व घयं गुलं वा।

व्याख्या—तस्मिन् कुतुपादिमुखे साध्वर्थमुद्घाटिते सति 'परसौ' याचकग्राहकादिकाय यद्वा—स्वकीय एव गृहे पुत्रादिभ्यस्तैलं
लवणं घृतं गुडं वा ददाति, यदिवा स करोत्यवश्यं विक्रयं, तेन च मूल्येनान्यत् क्रीणाति, एतच्च सर्वं साध्वर्थमुद्घाटिते सति प्रवर्त्तते इति
साधोः प्रवृत्तिदोषः। तथा [चैतदे]व 'अहिगरणम्' इत्यवयवं व्याचिख्यासुराह—

दाणे कयविक्कए वा होई अहिगरणमजयभावस्स । निवयंति जे य तहियं जीवा मुइयंगमूसाई ॥ ३५३ ॥

व्याख्या—दाने क्रये विक्रये वाऽनन्तरोक्तस्वरूपे प्रवर्त्तमाने साधोः 'अयतभावस्य' अयतोऽशुद्धाहारापरिहारकत्वेन जीवरक्षणरहितः भावः—अध्यवसायो यस्य स तथा तस्य 'अधिकरणं' पापप्रवृत्तिरुपजायते, तथा तस्मिन् कुतुपादिमुखे उद्घाटिते ये जीवा मुइङ्गमूषकादयो निपतन्ति निपत्य च विनाशमाविशन्ति तदप्यधिकरणं साधोरेव । सम्प्रति 'ते चेव कवाडंमि' इत्यवयवं व्याचिख्यासुराह—

जहेव कुंभाइसु पुव्वलित्ते, उब्भिज्जमाणे य हवंति काया । ओलिंपमाणेवि तहा तहेव, काया कवाडंमि विभासियव्वा ३५४

व्याख्या—यथैव 'कुम्भादौ' घटादौ, आदिशब्दात्कुतुपादिपरिग्रहः, पूर्वलिप्ते उद्भिद्यमाने 'कायाः' पृथिवीकायादयो विराध्यमाना भवन्ति, उपलक्षणमेतत्, तेन दानक्रयविक्रयाधिकरणप्रवृत्तिश्च भवति, तथा कपाटेऽपि पूर्वदत्ते साध्वर्थमुद्घाट्यमाने वेदितव्याः, तथाहि—यदा कपाटात् प्राक्कथमपि पृथिवीकायो जलभृतः करको वा वीजपूरादिकं वा मुक्तं भवति तदा तस्मिन्नुद्घाट्यमाने कपाटे तद्विराधना भवति, जलभृते करकादौ तु भिद्यमाने [वा] पानीयं प्रसर्पेत् प्रत्यासन्नचुल्ल्यादावपि प्रविशेत्, तथा च सत्यग्निविराधना, यत्र चाग्निस्तत्र वायुरिति वायुविराधना च, मूइकादिविवरप्रविष्टकीटिकागृहगोधिकादिसत्त्वविनाशे त्रसकायविराधना चेति, दानक्रयविक्रयाधिकरणप्रवृत्तिभावना च पूर्ववत्कर्त्तव्या । 'सम्प्रति सविसेसा' इत्यवयवं व्याचिख्यासुराह—

घरकोइलसंचारा आवत्तण पीढगाइ हेट्ठुवरिं । निंतेवि एयअंतो डिंभाईपेल्लणे दोसा ॥ ३५५ ॥

व्याख्या—कपाटस्य 'सञ्चारात्' सञ्चलनाद्गृहगोधिका, उपलक्षणमेतत् कीटिकोन्दुरादयश्च विराध्यन्ते, तथा प्रासादस्याधो भूमि-

रूपा पीठिकेव पीठिका—चयिका तत्राध उपरितले च कपाटैकदेशस्यावर्त्तने तदाश्रिताः कुन्थुपिपीलिकादयो विनाशमश्नुवते, तथोद्घाट्य कपाटे पश्चान्मुखं नीयमानेऽन्तःस्थिते(रिति) अन्तःस्थितस्य डिम्भादेः प्रेरणे दोषाः—शिरःस्फोटनादयो भवन्ति । सम्प्रत्यपवादमाह—

घेप्पइ अकुंचियागंमि कवाडे पइदिणे परिवहंते । अजऊमुद्दिय गंठी परिभुज्जइ दद्दरो जो य ॥ २५६ ॥

व्याख्या—'अकुञ्चिकाके' कुञ्चिकारहिते, कुञ्चिकाविवररहिते इत्यर्थः, तत्र हि किल पृष्ठभागे उल्लालको न भवति तेन न घर्षणद्वारेण सत्त्वविराधना, यद्वा—'अकूइयागे'त्ति पाठः, तत्र 'अकूजिकाके' कूजिकारहिते अक्रेङ्काराराये, किमुक्तं भवति ?—यदुद्घाट्यमानं कपाटं क्रेङ्काररवं न करोति, तद्धि पश्चात्क्रियमाणमूर्ध्वमधस्तिर्यग् घर्षत् प्रभूतरात्त्वव्यापादनं करोति तेन तद्वर्जनं, तस्मिन्नपि किंविशिष्टे ?—इत्याह—'प्रतिदिनं' प्रतिदिवसं—निरन्तरं 'प्रतिवहति' उद्घाट्यमाने दीयमाने चेत्यर्थः, तस्मिन् प्रायो न गृहगोधिकादिसत्त्वाश्रयसम्भवः, चिरकालमवस्थानाभावात् । इत्थंभूते कपाटे साध्वर्थमप्युद्घाटिते यद्दाति गृहस्थः तद्गृह्यते, स्थविरकल्पिकानामाचीर्णमेतत्, तथा यश्च 'दर्दरकः' कुतुपादीनां मुखबन्धरूपः प्रतिदिवसं परिभुज्यते—बध्यते छोड्यते चेत्यर्थः, तत्र यदि जतुमुद्राव्यतिरेकेण केवलवस्त्रमात्रग्रन्थिर्दीयेत नापि च सचित्तपृथिवीकायादिलेपः तर्हि तस्मिन् साध्वर्थमुद्भिन्नेऽपि यद्दीयते तत्साधुभिर्गृह्यते इति उक्तमुद्भिन्नद्वारम्, अथ मालापहृतद्वारमाह—

मालोहडंपि दुविहं जहन्नमुक्कोसगं च बोद्धव्वं । अग्गतलेहिं जहन्नं तव्विवरीयं तु उक्कोसं ॥ २५७ ॥

व्याख्या—मालापहृतं द्विविधं, तद्यथा—जघन्यमुत्कृष्टं च, तत्र यदूर्ध्वस्ताभ्यां पादयोरग्रभागाभ्यां फरुकसञ्ज्ञाभ्यां पार्ष्णिभ्यां

चोत्पाटिताभ्यामूर्ध्वविलगितोच्चसिक्ककादिस्थितं दात्र्या दृष्टेरगोचरं यद्दीयते तज्जघन्यं मालापहृतं, 'तद्विपरीतं' जघन्याद्विपरीतं बृहन्निःश्रेण्यादिकमारुह्य प्रासादोपरितलादानीय दीयते तदुत्कृष्टं मालापहृतं । सम्प्रत्यनयोरेव दृष्टान्तौ सदोषौ वक्तुकाम आह—

भिक्खू जहन्नगंमी गेरुय उक्कोसगंमि दिट्ठंतो । अहिडसणमालपडणे य एवमाई भवे दोसा ॥ ३५८ ॥

व्याख्या—जघन्ये मालापहृते भिक्षुर्वन्दको दृष्टान्तः, उत्कृष्टे 'गेरुकः' कापिलः, तत्र जघन्ये मालापहृते 'अहिदशनं' सर्पदशनम्, उत्कृष्टे मालात्पतनमित्येवमादयो दोषा अभूवन् ॥ तत्र भिक्षुदृष्टान्तं गाथाद्वयेनाह—

मालाभिमुहं दट्ठूण अगारिं निग्गओ तओ साहू । तच्चन्निय आगमणं पुच्छा य अदिन्नदाणन्ति ॥ ३५९ ॥

मालंमि कुडे मोयग सुगंध अहि पविसणं करे डक्का । अन्नदिण साहु आगम निदय कहणा य संबोही ॥३६०॥

व्याख्या—जयन्तपुरं नाम नगरं, तत्र यक्षदिन्नो नाम गृहपतिः, तस्य भार्या वसुमती, अन्यदा च तद्गृहे धर्मरुचिर्नाम संयतो भिक्षार्थं प्रविवेश, तं च नियमितेन्द्रियमरक्तद्विष्टमेषणासमितमवलोक्य समुत्पन्नविशिष्टदानपरिणामेन यक्षदिन्नेन वसुमती सादरं बभणे, यथा देहि साधवेऽस्मै अमुकान् मोदकानिति, ते च मोदका ऊर्ध्वं विलगितोच्चसिक्ककमध्ये व्यवस्थिते घटेऽवतिष्ठन्ते, ततः सा तद्ग्रहणार्थमुत्थिता, साधुश्च तां मालापहृतां भिक्षामवबुध्यमानस्तद्गृहान्निर्जगाम । ततस्तत्कालं तस्मिन्नेव गृहे भिक्षायै भिक्षुरागमत्, पप्रच्छ च तं यक्षदिन्नो यथा किं भोः ? [समं] तेन सिक्ककादानीय ! दीयमाना भिक्षा न जगृहे, ? ततः स प्रवचनमात्सर्यादेवमुवाच—अदत्तदाना अमी खलु वराकास्ततो न लभन्ते पूर्वकर्मविनियोगतो युष्मादृशामीश्वराणां गृहेषु स्निग्धमधुरादिकं भोजनं भोक्तुं, किन्तु तैर्दुर्गतगृहेष्वन्तप्रान्तादिकं लब्ध्वा भोक्तव्यमिति, ततो

यक्षदिन्नेन तस्मायपि तानेव मोदकान् वसुमती दापिता, सा तस्मिन्नेव सिक्ककविलगिते घटे मोदकानादातुमचालीत्, घटे च महोत्तमद्रव्यनिष्पन्नमोदकगन्धाघ्राणवशतः कथमपि भुजङ्गमः समागतोऽवतिष्ठते, वसुमती चोत्पाट्य पार्ष्णी पादाग्रतलभरेण यावन्मोदकघटे कङ्केल्लिपल्लवोपमं करं प्रक्षिपति तावद्भुजङ्गमः कामुक इव सादरं तं प्रत्यगृह्णात्, ततो हा ! दष्टा दष्टेति पूत्कारं कुर्वती भूमौ निपपात, ददृशे च यक्षदिन्नेन फूत्कारं कुर्वन् दन्दशूकः, ततस्तत्क्षणादेव समाहूताः परममन्त्रवादिनः, समानीतानि च नानाविधानि भेषजानि, ततोऽस्याप्यायुरत्रुटितमिति मन्त्रौषधप्रभावतः सा नीरुग्बभूव, समाजगाम च भूयोऽप्यपरस्मिन् दिने स एव धर्मरुचिः संयतो भिक्षायै, उपालेभे च यक्षदिन्नेन यथा दयाप्रधानो धर्मस्तत्किं भोः साधो ! सुविहित तव तदानीं सर्पं पश्यतोऽप्युपेक्षा प्रावर्त्तिष्ट ?, स प्राह—नाहमद्राक्षं तदानीं दन्दशूकं, केवलमयमस्माकं सार्वज्ञ उपदेशो यथा मा ग्राहिषुः साधवो ! मालापहृतं भिक्षामिति, ततोऽहं प्रतिनिवृत्तः, एवं चोक्ते यक्षदिन्नः स्वचेतसि चिन्तयामास—अहो ! निरपायो भगवता निरुपादेशि भिक्षूणां धर्मः, य एव चेत्थं निरपायं धर्ममुपदिशति स्म स एव सर्वज्ञो न खलु सुधाभ्यवहारमन्तरेण सुधोद्गार उज्जृम्भते, एवं न यावज्ज्ञेयव्यापिज्ञानमन्तरेणेत्थं सकलकालमनपायिनो धर्मस्योपदेशप्रवृत्तिः, बुद्धिप्रागल्भ्ये हि वचसि प्रागल्भ्यमुपालम्भि तस्मात्स एव सर्वज्ञ इति, इत्थं च विचिन्त्य भक्तिवशोच्छलितपुलकजालोपशोभिततनुः सादरं धर्मरुचिश्रमणमवन्दत, वन्दित्वा च जिनप्रणीतं धर्मं पप्रच्छ, स च कथयामास सङ्क्षेपतः, ततो जिनप्रणीतवाक्यामृतरसास्वादतस्तेषामवजगाम सकलमपि मायास्नानवीर्यादिसम्पादितकुवासनामयं गरलं, पश्यति च यथावस्थितानि हेयोपादेयानि वस्तूनि, प्रमोदते च जात्यन्ध इव चक्षुर्लाभे सविशेषतरं, ततो मध्याह्ने विशेषतो गुरुसमीपे समागत्य धर्मं श्रुत्वा जातसंवेगौ दम्पती अपि प्रव्रज्यां प्रपेदाते । सूत्रं सुगमं । सम्प्रत्यस्मिन्नेव जघन्ये मालापहृतेऽन्यानपि दोषानभिधित्सुराह—

आसंदिपीढमंचकजंतोडूखल पडंत उभयवहे । वोच्छेय पओसाई उड्डाहमनाणिवाओ य ॥ ३६१ ॥

व्याख्या—'आसंदी' मञ्चिका 'पीठं' गोमयादिमयमासनं 'मञ्चकः' प्रतीतः 'यन्त्रं' व्रीह्यादिदलनोपकरणम्, 'उडूखलः' प्रतीतः, एतेष्वारुह्य, उपलक्षणमेतत्, पार्ष्णी चोत्पाट्य ऊर्ध्वविलगितासिक्कादिस्थितमोदकादिग्रहणे कथमपि यदि मञ्चकादिह्लसनतो दात्री निपतति तर्हि 'उभयवधः' दात्र्याः पृथिव्यादिकायादीनां च विनाशः। तत्र दात्र्या हस्तादिभङ्गतो यदिवा विसंस्थुलपतनतः कथमप्य-स्थानाभिघातसम्भवात्प्राणव्यपरोपणमपि, तया च निपतन्त्या भूम्याद्याश्रितानां पृथिवीकायादीनामपि विनाशः, यथैतस्मै भिक्षामहं ददती प्रागपि महत्यनर्थे पतितेति न कोऽप्यस्मै दास्यतीति तद्गृहे तद्द्रव्यान्यद्रव्यव्यवच्छेदः, तथा मुण्डेनानेन परमार्थतः पातितेति कस्यापि गृह-स्वामिनः साधुविषयः प्रद्वेषोऽपि भवति, आदिशब्दात्ताडनादिपरिग्रहः, प्रद्वेषदग्धो हि कोऽपि कोपान्धतया ताडनमपि कुर्यात्, कोऽपि निर्भ-र्त्सनं, कोऽपि वधमपि, तथा च प्रवचनस्योड्डाहः—खिंसा यथा—साध्वर्थमेषा भिक्षामाहरन्ती परासुरभूत्, तस्मान्नामी साधवः कल्याणका-रिणः, लोके चाज्ञानवादः—एवंविधमपि दात्र्या अनर्थमेते न जानन्तीत्येवं मूर्खताप्रवादः, तस्माज्जघन्यमपि मालापहृतमवश्यं परिहर्त्तव्यं ॥ तदेवमुक्तो जघन्यस्य मालापहृतस्य सदोषो दृष्टान्तोऽन्येऽपि च दोषाः, सम्प्रत्युत्कृष्टस्य तानाह—

एमेव य उक्कोसे वारणनिस्सेणि गुव्विणीपडणं । गब्भित्थिकुच्छिफोडण पुरओ मरणं कहण बोही ॥ ३६२ ॥

व्याख्या—जयन्तीनाम पुरी, तत्र सुरदत्तो नाम गृहपतिः, तस्य भार्या वसुन्धरा, अन्यदा च तद्गृहे गुणचन्द्राभिधः साधुर्भि-क्षार्थं प्राविशत्, तं च प्रशान्तमनसमिहपरलोकनिःस्पृहं मूर्त्तं धर्ममिव समागच्छन्तमवेक्ष्य सुरदत्तो वसुन्धरामाभिहितवान्—यथा देहि साधवे

मालादानीय मोदकानिति, सा च तदानीमन्तर्वर्त्नी, परं पत्युरादेशं देवताशेपामिव प्रतीच्छन्ती मोदकानयनाय मालाभिमुखां निश्रेणिमारो-
द्रुमयतिष्ठ, साधुश्च न कल्पते मालापहृता भिक्षा संयतानामिति तां विनिवार्य तद्गृहान्निःससार, ततस्तत्क्षण एव कोऽपि कापिलो भिक्षार्थं
तस्मिन्नेव गृहे प्राविशत, सुरदत्तेन च स पृष्टो-यथा भोः ! किं संयतेन मालादानीयमाना भिक्षा न प्रतिजगृहे ?, ततः स मात्सर्यवशाद-
सम्बद्धं किमप्यभाषिष्ट, ततस्तस्मायापि सुरदत्तो वसुन्धरया मोदकान् दापितवान्, वसुन्धरा च मोदकानयनार्थं निःश्रेणिमारोहन्ती कथ-
मपि पादह्लसनतो विसंस्थुलाङ्गी न्यपतत्, अधश्च व्रीहिदलनयन्त्रकमासीत्, ततस्तत्कीलकस्तस्या निपतन्त्याः कुक्षिं द्विधा पाटयामास
निर्गतश्च परिस्फुरँस्ततो गर्भः, कीलकविदारिततया महापीडाऽतिशयभावतः पश्यतामेव सकललोकानां सदुःखं स्पन्दमानः
पञ्चत्वमगमत, तथा वसुन्धरा च, तत उच्छलितः पापीयसः कापिलस्यावर्णवादः, अन्यदा च भूयोऽपि तस्मिन्नेव गृहे स एव साधुर्भि-
क्षार्थमाजगाम, सुरदत्तश्च तमप्राक्षीत्-भगवन् ! यथा यूयं ज्ञानचक्षुषा दात्र्या विनाशमवेक्षमाणा भिक्षां परिहृतवन्तः तथाऽस्माकमपि किं
नाचीकथत?, येन तदानीं सा मालं नारोहेत्, ततः साधुरवोचत्-नाहं किमपि जाने, केवलमयमस्माकं सार्वज्ञ उपदेशः-यथा न कल्पते
साधूनां मालापहृता भिक्षेति, ततः स पूर्ववदचिन्तयद्धर्ममश्रौषीत प्रव्रज्यां चाग्रहीदिति, सूत्रं सुगमं, नवरम्, एवमेव जघन्यमालापहृते
इवोत्कृष्टेऽपि मालापहृते 'पडन्त उभयवहो' इत्यादयो दोपा वक्तव्याः । तत्र दात्र्या वधे उदाहरणं 'वारणनिस्सेणि' इत्यादि । सम्प्र-
ति मालापहृतमेव भङ्ग्यन्तरेणाह—

उड्ढमहे तिरियंपि य अहवा मालोहडं भवे तिविहं । उड्ढे य महोयरणं भणियं कुंभाइसू उभयं ॥ २६३ ॥

व्याख्या—अथवा मालापहृतं त्रिविधं, तद्यथा-ऊर्ध्वमधस्तिर्यक् च, तत्र ऊर्ध्वमेतदनन्तरोक्तमूर्ध्वविलगितसिक्कादिगतम्, अधो

भूमिगृहादाववतरणं–प्रवेशः, तत्राधोऽवतरणेन यद्दीयते तदप्युपचारादधोऽवतरणं, तथा 'कुंभादिषु' कुम्भोष्ट्रिकाप्रभृतिषु यद्वर्त्तते देयं तदुभयम्–ऊर्ध्वाऽधोमालापहृतस्वभावं भणितं तीर्थकरादिभिः, तथाहि–बृहत्तरोच्चैस्तरकुम्भादिमध्यव्यवस्थितस्य देयस्य ग्रहणाय येन दात्री पाष्ण्युत्पाटनादि करोति तेनोर्ध्वमालापहृतं, येन त्वधोमुखं बाहुमतिप्रभूतं व्यापारयति तेनाधोमालापहृतं, दोषा अत्रापि पूर्ववद्भावनीयाः। अत्रैवापवादमाह—

दद्दर सिल सोवाणे पुव्वारूढे अणुच्चमुक्खित्ते । मालोहडं न होई सेसं मालोहडं होइ ॥ ३६४ ॥

व्याख्या—'दर्दरः' निरन्तरकाष्ठफलकमयो निःश्रेणिविशेषः 'शिला' प्रतीता 'सोपानानि' इष्टकामयान्यवतरणानि, एतान्यारुह्य यद्ददाति तन्मालापहृतं न भवति, केवलं साधुरप्येषणाशुद्धिनिमित्तं प्रासादस्योपरि दर्दरादिना चटति, अपवादेन भूस्थोऽप्यानीतं गृह्णाति, तथा पूर्वारूढः साध्वागमनादग्रतः स्वयोगेन निःश्रेण्यादिना प्रासादोपरि चटितो दाता यद्ददाति साधुपात्रके, कथंभूते? इत्याह–अनुच्चोत्क्षिप्ते, किमुक्तं भवति?–भूमिस्थः संयतो दृष्टेरधः पात्रं धारयन् यावत्प्रमाणे उच्चैःस्थाने स्थितो दाता पात्रे हस्तं प्रक्षिप्य ददाति तावत्प्रमाणे पूर्वारूढो यद्ददाति तन्मालापहृतं न भवति, शेषं तु सर्वमप्यनन्तरोक्तं मालापहृतमवसेयम्। इहानुच्चोत्क्षिप्तोच्चोत्क्षिप्तयोः स्वरूपमाह—

तिरियायय उज्जुगएण गिण्हई जं करेण पासंतो । एयमणुच्चुक्खित्तं उच्चुक्खित्तं भवे सेसं ॥ ३६५ ॥

व्याख्या—तिर्यग् आयतेन–दीर्घेण 'ऋजुकेन' सरलेन 'करेण' हस्तेन पात्रं दृष्ट्या निभालयन् यद्गृह्णाति तदित्थंभूतं पात्रमनुच्चोत्क्षिप्तमुच्यते, शेषं पुनरुच्चोत्क्षिप्तं, इयमत्र भावना–यद्दृष्टेरुपरि बाहुं प्रसार्य देयवस्तुग्रहणाय पात्रं ध्रियते तत्तथा ध्रियमाणमुच्चोत्क्षिप्तमिति,

पडियरणपओसेणं भावं नाउं जइस्स आलावो। तन्निब्बंधा गहियं हंदि स मुक्कोसि मा बीयं ॥ ३६९ ॥

व्याख्या—वसन्तपुरं नाम नगरं, तत्र जिनदासो नाम श्रावकः, तस्य भार्या रुक्मिणी, जिनदासस्य गृहे वत्सराजो नाम गोपालः, स चाष्टमे अष्टमे दिने सर्वासामपि गोमहिषीणां दुग्धमादत्ते, तथैव तस्य प्रथमतो धृतत्वात्, अन्यदा च साधुसङ्घाटको भिक्षायै तत्रागमत्, इतश्च तस्मिन् दिने गोपालस्य सर्वदुग्धादानवारकः, ततस्तेन सर्वा अपि गोमहिष्यो दुग्धा महती पारिर्दुग्धस्यापूर्णा, जिनदासश्च जिनवचनभावितान्तःकरणतया साधुसङ्घाटकं परमपात्रभूतमायातमवलोक्य भक्तितो यथेच्छं भक्तपानादिकं तस्मै दत्तवान्, ततो 'दुग्धान्तानि भोजनानी'ति परिभाव्य भक्तितरलितमनस्कतया गोपालस्य दुग्धं बलादाच्छिद्य कतिपयं ददौ, ततः स गोपालो मनसि साधोरुपरि मनाक् प्रद्वेषं ययौ, परं प्रभुभयान्न किमपि वक्तुमीशितः, ततस्तत्पयोभाजनं कतिपयन्यूनं स्वगृहे नीतवान्, तच्च तथाभूतं न्यूनमवलोक्य भार्या सरोषं पृष्टवती, किमिति न्यूनमिदं पयोभाजनम् ? इति, ततो गोपेन यथावस्थिते कथिते साऽपि साधुमाक्रोष्टुं प्रावर्त्तत, चेटरूपाणि च दुग्धं स्तोकमवलोक्य किमस्माकं भविष्यतीति रोदितुं प्रवृत्तानि, तत इत्थं सकलमपि स्वकुटुम्बमाकुलमवेत्य स गोपः सञ्जातसाधुविषयमहाकोपः साधुं व्यापादयितुं चलितवान्, दृष्टश्च भिक्षार्थं परिभ्रमन् कापि प्रदेशे साधुः, ततः प्रधावितो लकुटमुत्पाट्य साधोः पृष्ठतः, साधुनापि कथमपि पश्चादवलोकने तं गोपं तथाभूतं कोपारुणनयनमालोक्य परिभावयामासे, नूनमेतस्य दुग्धं बलादाच्छिद्य जिनदासेन मह्यं ददे तेन मम मारणार्थमिव कुपित एष समागच्छन्नुपलक्ष्यते, ततः साधुर्विशेषतः प्रसन्नवदनो भूत्वा तस्यैव सम्मुखं प्रत्यागन्तुं प्रावर्त्तत, बभाण च यथा—भो भोः क्षीरगृहनियुक्तक ! तव प्रभुनिर्बन्धेन मया तदानीं दुग्धमात्तं सम्प्रति तु गृहाण त्वमात्मीयं दुग्धमिति, एवं चोक्ते सत्युपशान्तकोपः साधुं प्रति स्वस्वभावं प्रकटितवान्, यथा भोः साधो ! सुविहित! तव मारणार्थमह-

मिदानीमागतः, परं सम्प्रति त्वद्वचनामृतपरिसेकत उपशशाम मे सर्वः कोपानलः, ततो गृहाण त्वमेवेदं दुग्धं, मुक्तश्चाक्षतप्राणो मया, परं भूयो
ऽप्येवमाच्छेद्य न ग्रहीतव्यमिति निवृत्तो गोपः, स्वस्थानं च गतः साधुरिति । सूत्रं सुगमं, नवरं 'पयभाणूणं'ति विभक्तिलोपात्पयो-
भाजनमूनं दृष्ट्वा 'भोई' इति भोग्या-भार्या इत्यर्थः, 'रोवे'त्ति रुदन्ति, 'हंदी'ति आमन्त्रणे, तन्निर्बन्धात् त्वदीयाजिनदासा-
ख्यप्रभुनिर्बन्धाद्गृहीतं, ततः स प्राह—मुक्तोऽसि सम्प्रति मा द्वितीयं वारमेवं गृहीथाः । सम्प्रति गोपालविषय एव 'अचियत्तसंखडाई'
इत्येतद्व्याचिख्यासुराह—

नानिव्विट्ठं लब्भइ दासीवि न भुज्जए रिते भत्ता । दोन्नेगयरपओसं जं काही अंतरायं च ॥ ३७० ॥

व्याख्या—प्रभुणा बलादाच्छिद्यमाने दुग्धे कोऽपि गोपो रुष्टः प्रभोः सम्मुखमेवमपि ब्रुवाणः सम्भाव्यते, यथा किमिति मदीयं
दुग्धं बलादागृह्णासि ?, न खलु 'अनिर्विष्टम्' अनुपार्जितमिह किमपि लभ्यते, ततो मया स्वशरीरायासबलेनेदं दुग्धमुपार्जितम्, अतः
कथमत्र प्रभवसि ?, न हि दास्यप्यास्तामुत्तमवेश्यादिकमित्यपिशब्दार्थः, 'भक्तादृते' भक्तपानमृते, भरणपोषणमृते इत्यर्थः, 'भुज्यते'
भोक्तुं लभ्यते, ततो मदीयं भोजनमिदम्, अतो न तेऽत्र प्रभुत्वावकाशः, एवं चोक्ते सति कदाचिद्द्वयोरपि प्रभुगोपालकयोः परस्पर-
मेकतरस्य वा द्वितीयस्योपरि प्रद्वेषो वर्द्धते, प्रद्वेषे च वर्द्धमाने यत् करिष्यति धनहरणमारणादिकं तत्स्वयमेवाऽऽच्छेद्यादाने दोषत्वेन
विज्ञेयं । तथा यच्चान्तरायं गोपालकस्य तत्कुटुम्बस्य च तदपि दोषत्वेन विज्ञेयमिति । तदेवं 'गोवालपइ' इति व्याख्यातम् । एतदनुसा-
रेण च भृतकादावपि यथायोगमप्रीत्यादिकं सम्भावनीयमिति । सम्प्रति स्वामिविषयमाच्छेद्यं विभावयिषुराह—

सामी चारभडा वा संजय दट्ठूण तेसि अट्ठाए । कलुणाणं अच्छेज्जं साहूण न कप्पए घेत्तुं ॥ ३७१ ॥

व्याख्या—इह स्वगृहमात्रनायकः प्रभुः ग्रामादिनायकः स्वामी चारभटा वा—स्वामिभटा वा, तेऽपि स्वामिग्रहणेन गृह्यन्ते। संयतान् दृष्ट्वा तेषां संयतानामर्थाय 'करुणानां' कृपास्थानानां दरिद्रकौटुम्बिकादीनां सम्बन्ध्याऽऽच्छिद्य यद्ददाति तत्साधूनां न कल्पते। एतदेव व्यक्तं भावयति—

आहारोवहिमाई जइअट्ठाए उ कोइ अच्छिंदे। संखडि असंखडीए तं गिण्हंते इमे दोसा ॥ ३७२ ॥

व्याख्या—यदि कोऽपि स्वामी भटो वा यतीनामर्थाय केपाञ्चित्सम्बन्ध्याहारोपध्यादिकं 'सङ्खड्या' कलहकरणेन 'असङ्खड्या' कलहाभावेन, कोऽपि हि तत्सम्बन्धिनि बलादाच्छिद्यमाने कलहं करोति, कोऽपि स्वामिभयादिना न किमपि वक्ति, तत उक्तं सङ्खड्याऽसङ्खड्या वेति, बलादाच्छिद्य यतिभ्यो ददाति तद्यतीनां न कल्पते। यतस्तद्गृह्णति यताविमे दोषाः ॥ तानेवाह—

अचियत्तमंतरायं तेनाहड एगऽणेगवोच्छेओ। निच्छुभणाइदोसा तस्स अलंभे य जं पावे ॥ ३७३ ॥

व्याख्या—येषां सत्कमाच्छिद्य बलात् स्वामिना दीयते तेषाम् 'अचियत्तम्' अप्रीतिरुपजायते, तथा तेषाम् 'अन्तरायं' दीयमानवस्तुपरिभोगहानिः कृता भवति, तथेत्थं साधूनामाददानानां स्तेनाहृतं भवति—अदत्तादानदोषो भवति, दीयमानवस्तुनायकेनाननुज्ञातत्वात्, तथा येषां सम्बन्धि स्वामिना बलादाच्छिद्य दीयते ते कदाचित्प्रद्विष्टाः सन्तोऽन्यदाऽपि तस्यैकस्य साधोर्भक्तपानव्यवच्छेदं कुर्वन्ति, तथाऽनेन सम्प्रति बलादस्माकं भक्तादि गृहीतं ततः कालान्तरेऽप्यस्मै न किमपि दातव्यमस्माभिरिति, अथवा सामान्यतः प्रद्वेषमुपयान्ति, यथाऽनेन संयतेन बलादस्माकं भक्तादि गृह्यते तस्मात्कालान्तरेण न कस्मायपि संयताय दातव्यमित्यनेकसाधूनां

भक्तादिव्यवच्छेदः, तथा ते रुष्टाः सन्तो यः पूर्वमुपाश्रयो दत्तः तस्मान्निष्काशयन्ति, आदिशब्दात्खरपरुषाणि भाषन्ते इति परिगृह्यते। तथा तस्य उपाश्रयस्यालाभे यत् किमपि कष्टं प्राप्नुवन्ति तदप्याच्छेद्यादाननिमित्तमिति दोषः। सम्प्रति स्तेनाच्छेद्यं भावयति—

तेणो व संजयट्ठा कलुणाणं अप्पणो व अट्ठाए। वोच्छेय पओसं वा न कप्पई कप्पणुन्नायं ॥ ३७४ ॥

व्याख्या—इह स्तेना अपि केचित् संयतान् प्रति भद्रका भवन्ति, संयता अपि क्वापि दरिद्रसार्थेन सह व्रजन्ति, ततस्तान् भिक्षावेलायां भिक्षामप्राप्नुवतो दृष्ट्वा संयतानामर्थाय यद्वा स्वस्याऽऽत्मनोऽर्थाय तेषां 'करुणानां' कृपास्थानानां दरिद्रसार्थमानुषाणां सकाशादाच्छिद्य यद्ददाति स्तेनः तत् स्तेनाच्छेद्यं द्रष्टव्यं, तच्च साधूनां न कल्पते, यतस्तस्मिन् गृह्यमाणे येषां सम्बन्धि तद्द्रव्यं ते पूर्वोक्तप्रकारेणैकानेकसाधूनां भक्तादिव्यवच्छेदं कुर्वन्ति, यद्वा—'प्रद्वेषं' रोषमुपयान्ति, तथा च सति सार्थान्निष्काशनं कालान्तरेऽपि तेषां पार्श्वे उपाश्रयाप्रतिलम्भ इत्यादयो दोषाः, यदि पुनस्तेऽपि सार्थिका वक्ष्यमाणप्रकारेणानुजानन्ते तर्हि कल्पते। एतदेव गाथाद्वयेन स्पष्टं भावयति—

संजयभद्दा तेणा आयंती वा असंथरे जइणं। जइ देंति न घेत्तव्वं निच्छुभवोच्छेउ मा होज्जा ॥ ३७५ ॥

घयसत्तुयदिट्ठंतो समणुन्नाया व घेत्तुणं पच्छा। देंति तयं तेसिं चिय समणुन्नाया व भुंजंति ॥ ३७६ ॥

व्याख्या—इह स्तेना अपि केचित् संयतभद्रका भवन्ति, साधवश्च कदाचिद्दरिद्रसार्थेन सह क्वापि व्रजन्ति, ततस्तेषां साधूनां भिक्षावेलायाम् 'असंस्तरे' अनिर्वाहे ते स्तेनाः स्वग्रामाभिमुखं प्रत्यागच्छन्तो वाशब्दात् स्वग्रामादन्यत्र गच्छन्तो वा यदि तेषां दरिद्र-

सार्थमानुषाणां बलादाच्छिद्य भक्तादि प्रयच्छन्ति तर्हि न ग्राह्यं, यतो मा भूत् 'निच्छोभः' सार्थान्निष्काशनं एकानेकसाधूनां तेभ्यो भक्तादिव्यवच्छेदो वा, यदि पुनस्तेऽपि सार्थिका स्तेनैर्बलाद्दाप्यमाना एवं ब्रुवते, यच्चास्माकमहो घृतसक्तुदृष्टान्त उपातिष्ठत, घृतं हि सक्तुमध्ये प्रक्षिप्तं विशिष्टसंयोगाय जायते, एवमस्माकमप्यवश्यं चौरैर्ग्रहीतव्यं, ततो यदि चौरा अपि युष्मभ्यं दापयन्ति ततो महानस्माकं समाधिरिति, तत एवं सार्थिकैरनुज्ञाताः साधवो दीयमानं गृह्णन्ति, पश्चाच्चौरेष्वपगतेषु भूयोऽपि तद्द्रव्यं गृहीतं तेभ्यः समर्पयन्ति, यथा तदानीं चौरप्रतिभयादस्माभिर्गृहीतं, सम्प्रति ते गतास्तत एतदात्मीयं द्रव्यं यूयं गृह्णीथेति, एवं चोक्ते सति यदि तेऽपि समनुजानते यथा—युष्मभ्यमेतदस्माभिर्दत्तमिति तर्हि भुञ्जते, कल्पनीयत्वादिति । अनेन 'कप्पणुन्नायं' इत्यवयवो व्याख्यातः । तदेवमुक्तमाच्छेद्यद्वारम्, इदानीमनिसृष्टद्वारमाह—

अणिसिट्ठं पडिकुट्ठं अणुनायं कप्पए सुविहियाणं । लड्डुग चोल्लग जंते संखडि खीरावणाईसु ॥ ३७७ ॥

व्याख्या—निसृष्टम्—अनुज्ञातं तद्विपरीतमनिसृष्टमननुज्ञातमित्यर्थः, तत् 'प्रतिक्रुष्टं' निराकृतं तीर्थकरगणधरैः, अनुज्ञातं पुनः कल्पते सुविहितानां, तच्चानिसृष्टमनेकधा, तद्यथा—'लड्डुकविषयं' मोदकविषयं, तथा 'चोल्लकविषयं' भोजनविषयं, 'यन्त्रे' इति कोल्हकादिघाणकविषयं, तथा 'संखडिविषयं' विवाहादिविषयं, तथा 'क्षीरविषयं' दुग्धविषयं, तथा आपणादिविषयम्, आदिशब्दाद्गृहादिविषयमवसेयम्, इयमत्र भावना—इह सामान्यतोऽनिसृष्टं द्विधा, तद्यथा—साधारणानिसृष्टं भोजनानिसृष्टं च, तत्र भोजनानिसृष्टं चोल्लकशब्देनोक्तं, साधारणानिसृष्टं तु शेषभेदैरिति । तत्र मोदकविषयसाधारणानिसृष्टोदाहरणं गाथाचतुष्टयेनाह—

बत्तीसा सामन्ने ते कहिँ ण्हाउं गयत्ति इअ वुत्ते । परसंतिएण पुन्नं न तरसि काउंति पच्चाह ॥ ३७८ ॥

अविय हु बत्तीसाए दिन्नेहिँ तवेगमोयगो न भवे। अप्पवयं बहुआयं जइ जाणसि देहि तो मज्झं ॥ ३७९ ॥
लाभिय नेंतो पुट्ठो किं लद्धं नत्थि पेच्छिमो दाए ।-इयरोऽवि आह नाहं देमित्ति सहोढ चोरत्ति ॥ ३८० ॥
गिण्हण कड्ढण ववहार पच्छकडुड्डाह पुच्छ निव्विसए । अपहुंमि भवे दोसा पहुंमि दिन्ने तओ गहणं ॥ ३८१॥

व्याख्या—रत्नपुरे पुरे माणिभद्रप्रमुखा द्वात्रिंशद्वयस्याः, ते कदाचिदुद्यापनानिमित्तं साधारणान् मोदकान् कारितवन्तः, कार-यित्वा च समुदायेनोद्यापनिकायां गताः, तत्र चैको मोदकरक्षको मुक्तः, शेपास्त्वेकात्रिंशन्नद्यां स्नातुं गताः, अत्रान्तरे च कोऽपि लोलुपः साधुर्भिक्षार्थमुपातिष्ठत, दृष्टाश्च तेन मोदकाः, ततो जातलाम्पट्यो धर्मलाभयित्वा तं पुरुषं मोदकान् याचितवान्, स प्राह—भगवन्! न ममैकाकिनोऽधीना एते मोदकाः, किन्त्वन्येपामप्येकात्रिंशज्जनानां, ततः कथमहं प्रयच्छामि?, एवमुक्ते साधुराह–ते 'कहिं'ति कुत्र गताः? स प्राह–नद्यां स्नातुमिति, तत एवमुक्ते भूयोऽपि साधुस्तं प्रत्याह—परसत्केन मोदकसमूहेन त्वं पुण्यं कर्त्तुं न शक्नोपि? यदेवं याचितो-ऽपि न ददासि, महानुभाव! मूढस्त्वं, यः परसत्कानपि मोदकान् मह्यं दत्त्वा पुण्यं नोपार्जयसि, अपि च द्वात्रिंशतमपि मोदकान् यदि मे प्रयच्छसि तथापि तव भागे एक एव मोदको याति, तत एवमल्पव्ययं बह्वायं दानं यदि जानासि सम्यग्हृदयेन तर्हि ततो देहि मे सर्वा-नपि मोदकानिति, तत एवमुक्ते दत्तास्तेन सर्वेऽपि मोदकाः, भृतं साधुभाजनं, ततः सञ्जातहर्षः साधुस्तस्मात्स्थानाद्विनिर्गन्तुं प्रवृत्तः, अत्रा-न्तरे च सम्मुखमागच्छन्ति माणिभद्रादयः, पृष्टश्च तैः साधुः—भगवन्! किमत्र त्वया लब्धं?, ततः साधुना चिन्तितं, यथैते ते मोदक-स्वामिनस्ततो यदि मोदका लब्धा इति वक्ष्ये तर्हि भूयोऽपि ग्रहीष्यन्ति, तस्मान्न किमपि लब्धमिति वच्मीति, तथैवोक्तवान्, ततस्तैर्मा-

णिभद्रप्रमुखैर्भाराक्रान्तं साधुमवलोक्य सञ्जातशङ्कैरभाणि—दर्शय निजभाजनं साधो ! येन प्रेक्षामहे, साधुश्च न दर्शयति, ततो बलात्प्रलोकितं, दृष्टा मोदकाः, ततः कोपारुणलोचनैः साधिक्षेपं रक्षकपुरुषः पृष्टः—यथा किं भोः ! त्वयाऽस्मै सर्वेऽपि मोदका दत्ताः ?, स भयेन कम्पमानोऽवोचत्—न मया दत्ताः, एवं चोक्ते माणिभद्रादिभिः साधुरूचे—चौरस्त्वं पाप साधुवेषविडम्बकः 'सहोढ' इति सलोप्त्र इदानीं प्राप्तोऽसि ? कुतस्ते मोक्ष इति गृहीतो वस्त्राञ्चले?, कर्षितो बहुना, ततः पश्चात्कृत इति गृहीत्वा सकलमपि पात्ररजोहरणादिकमुपकरणं गृहस्थीकृतः, ततः 'उड्डाह' इति नीतो राजकुलं, कथितो धर्माधिकरणिकानां, पृष्टश्च तैः साधुश्च न किमपि लज्जया वक्तुं शक्तवान्, ततस्तैः परिभावितं—नूनमेष चोर इति, परं साधुवेषधारीतिकृत्वा प्राणैर्मुक्तो निर्विषयश्चाऽऽज्ञापितः, एवमत्र भावना—अनायके दातरि एतेऽनन्तरोक्ता ग्रहणकर्षणादयो दोषा भवन्ति, 'पहुंमि' त्ति तृतीयार्थे सप्तमी, यथा 'तिसु तेसु अलंकिया पुहवी' इत्यत्र, ततोऽयमर्थः—तस्मात् 'प्रभुणा' नायकेन दत्ते सति साधुना ग्रहणं भक्तादेः कर्त्तव्यं, तत्राप्याच्छेद्यादिकं सम्यक् परिहर्त्तव्यमिति । उक्तं सोदाहरणं मोदकद्वारम्, अधुना शेषाण्यपि द्वाराण्यतिदेशेन व्याख्यानयति—

एमेव य जंतंमिवि संखडि खीरे य आवणाईसुं । सामन्नं पडिकुट्ठं कप्पइ घेत्तुं अणुन्नायं ॥ ३८२ ॥

व्याख्या—'एवमेव' मोदकोदाहरणप्रकारेण यन्त्रेऽपि सङ्खड्यामपि क्षीरे चाऽऽपणादिषु च यत् 'सामान्यं' साधारणं तत् स्वामिभिः सर्वैरप्यनिसृष्टं सत् प्रतिक्रुष्टं तीर्थकरगणधरैः, अनुज्ञातं पुनः सर्वैरपि स्वामिभिः कल्पते ग्रहीतुं, तत्र दोषाभावात् । सम्प्रति चुल्लकद्वारस्य प्रस्तावनां चुल्लकस्य भेदं च प्रतिपादयति—

चुल्लत्ति दारमहुणा बहुवत्तव्वंति तं कयं पच्छा । वन्नेइ गुरु सो पुण सामिय हत्थीण विन्नेओ ॥ ३८३ ॥

व्याख्या—अधुना चुल्लकद्वारं व्याख्येयम्, अथोच्येत–मूलगाथाया द्वितीये स्थाने निर्दिष्टमपि कस्माद्व्याख्यावेलाया पश्चात्कृतं ?, तत आह—वहुवक्तव्यमिदं द्वारमतो व्याख्यावेलायां पश्चात्कृतं, तत्र 'गुरुः' तीर्थकरादिः 'वर्णयति' प्ररूपयति यथा स चुल्लको द्विधा, तद्यथा—स्वामिनो हस्तिनश्च । तत्र प्रथमतः स्वाम्यनिर्दिष्टं चुल्लकमाह—

छिन्नमछिन्नो दुविहो होइ अछिन्नो निसिट्ठअणिसिट्ठो । छिन्नंमि चुल्लगंमी कप्पइ घेत्तुं निसिट्ठंमि ॥ ३८४ ॥

व्याख्या—इह द्विधा चुल्लकः, तद्यथा—छिन्नोऽच्छिन्नश्च, इयमत्र भावना—इह कोऽपि कौटुम्बिकः क्षेत्रगतहालिकानां कस्यापि पार्श्वे कृत्वा भोजनं प्रस्थापयति, स यदैकैकहालिकयोग्यं पृथक् पृथग् भाजने कृत्वा प्रस्थापयति तदा स चुल्लकश्छिन्नः, यदा तु सर्वेषा-मपि हालिकानां योग्यमेकस्यामेव स्थाल्यां कृत्वा प्रेषयति तदा सोऽच्छिन्नः, एवमन्यत्राप्युद्यापनिकादौ छिन्नाच्छिन्नत्वं चुल्लकस्य भावनी-यम् । अच्छिन्नोऽपि द्विधा, तद्यथा—निसृष्टोऽनिसृष्टश्च, तत्र निसृष्टः कौटुम्बिकेन येषां च हालिकानां योग्यः स चुल्लकः तैश्च साधुभ्यो दानाय मुत्कलितः, इतरस्त्वमुत्कलितोऽनिसृष्टः । तत्र यस्य निमित्तं छिन्नः स एव चेत्तस्यात्मीयस्य छिन्नस्य दाता तर्हि तस्मिंश्छिन्ने-ऽपि चुल्लके तत्स्वामिना दीयमाने साधूनां ग्रहीतुं कल्पते, दोषाभावात्, तथाऽच्छिन्नेऽपि सर्वैरपि तत्स्वामिभिर्निसृष्टे—अनुज्ञाते तं ग्रहीतुं कल्पते, तत्रापि दोषाभावात् । एनमेवार्थं सविशेषतरमाह—

छिन्नो दिट्ठमदिट्ठो जो य निसिट्ठो भवे अछिन्नो य । सो कप्पइ इयरो उण अदिट्ठदिट्ठो वऽणुन्नाओ ॥ ३८५ ॥

व्याख्या—यश्चुल्लको यस्य निमित्तं छिन्नः स तने दीयमानो मूलस्वामिना कौटुम्बिकेनादृष्टो दृष्टो वा कल्पते, तथा यश्चाच्छिन्नो

योऽपि च यस्य निमित्तं छिन्नः स स्वस्वस्वामिभिरनुज्ञातोऽन्येन दीयमानः स्वस्वस्वामिभिरदृष्टो दृष्टो वा कल्पते, 'इयरो उ ण'त्ति इतर एतद्व्यतिरिक्तः तुः–पुनरर्थे छिन्नोऽछिन्नो वा स्वस्वस्वामिभिरननुज्ञातोऽदृष्टो दृष्टो वा न कल्पते, प्रागुक्तग्रहणादिदोषसम्भवात्, अयं च विधिः साधारणानिसृष्टेऽपि वेदितव्यः। तथा चैतदेव गाथार्द्धेन प्रतिपादयति—

अणिसिट्ठमणुन्नायं कप्पइ घेत्तुं तहेव अदिट्ठं।

व्याख्या—अनिसृष्टं–साधारणानिसृष्टं पूर्वं स्वस्वामिभिः सर्वैरननुज्ञातमपि यदि पश्चादनुज्ञातं भवति तर्हि कल्पते तद्ग्रहीतुं। तथाऽनुज्ञातं सत् सर्वैः स्वामिभिरन्यत्रगतत्वादिना कारणेनादृष्टमपि ग्रहीतुं कल्पते, दोषाभावात्। सम्प्रति हस्तिनश्चुल्लकानिसृष्टं गाथोत्तरार्द्धेन भावयति—

जड्डुस्स य अनिसिट्ठं न कप्पई कप्पइ अदिट्ठं ॥ ३८६ ॥

व्याख्या—हस्तिनो भक्तं मिण्ठेनानुज्ञातमपि राज्ञा गजेन चानिसृष्टम्—अननुज्ञातं न कल्पते, वक्ष्यमाणग्रहणादिदोषप्रसङ्गात्, तथा मिण्ठेन स्वलभ्यं भक्तं दीयमानं गजेनादृष्टं कल्पते, गजदृष्टग्रहणे तु वक्ष्यमाणोपाश्रयभङ्गादिदोषप्रसङ्गः। अस्यैव विधेरन्यथाकरणे दोषानाह—

निवपिंडो गयभत्तं गहणाई अंतराइयमदिन्नं। डुंबस्स संतिएवि हु अभिक्खं वसहीएँ फेडणया ॥ ३८७ ॥

व्याख्या—इह यद्राजस्य भक्तं तद्राज्ञः पिण्डो—राज्ञो भक्तं, ततो राज्ञाऽननुज्ञातस्य ग्रहणे ग्रहणादयो—ग्रहणाकर्षणवेषोद्दालनादयो दोषा भवेयुः, तथा 'आन्तरायिकम्' अन्तरायनिमित्तं पापं साधोः प्रसज्यते, राजा हि मदीयाज्ञामन्तरेणैष साधवे पिण्डं ददातीति रुष्टः सन् कदाचिद् मिण्ठं स्वाधिकाराद्भ्रंशयाति, ततो मिण्ठस्य वृत्तिच्छेदः साधुनिमित्त इति साधोरन्तरायिकं पापं, तथा 'अदिन्नं' ति अदत्तादानदोषो, राज्ञाऽननुज्ञातत्वात्, तथा 'डुम्बस्य' मिण्ठस्य सत्के पिण्डे मिण्ठेन स्वयं दीयमाने 'अभीक्ष्णं' प्रतिदिवसं यदि साधुस्तं पिण्डं गजस्य पश्यतो गृह्णाति तदा मदीयकवलमध्यादनेन मुण्डेन पिण्डो गृह्यते इत्येवं कदाचिद्रुष्टः सन् यथायोगं मार्गे परिभ्रमन्नुपाश्रेय तं साधुं दृष्ट्वा तमुपाश्रयं स्फोटयेत्, साधुं च कथमपि प्राप्य मारयेत्, तस्मान्न गजस्य पश्यतो मिण्ठस्यापि सत्कं गृह्णीयात्। तदेवमुक्तमनिसृष्टद्वारम्, अधुनाऽध्यवपूरकद्वारमाह—

अज्झोयरओ तिविहो जावंतिय सघरमीसपासंडे। मूलंमि य पुव्वकये ओयरई तिण्ह अट्ठाए ॥ ३८८ ॥

व्याख्या—अध्यवपूरकः 'त्रिविधः' त्रिप्रकारः, तद्यथा—'जावंतिय' इति स्वगृहमिश्रशब्दयोरत्रापि सम्बन्धनात् स्वगृहयावदर्थिकामिश्रः 'सघरमीसे' त्ति अत्र साधुशब्दोऽध्याह्रियते, स्वगृहसाधुमिश्रः, 'पासंडे' इति अत्रापि यथायोगं स्वगृहमिश्रशब्दसम्बन्धः, स्वगृहपाषण्डिमिश्रः, स्वगृहश्रमणमिश्रः स्वगृहपाषण्डिमिश्रेऽन्तर्भावित इति पृथग्नोक्तः। त्रिविधस्यापि सामान्यतो लक्षणमाह—'मूलंमी'त्यादि, मूले—आरम्भेऽग्निसन्धुक्षणस्थालीजलप्रक्षेपादिरूपे पूर्वं—यावदर्थिकाद्यागमनात् प्रथममेव स्वार्थं निष्पादिते पश्चाद्यथासम्भवं 'त्रयाणां' यावदर्थिकादीनामर्थाय 'अवतारयति' अधिकतरांस्तण्डुलादीन् प्रक्षिपति, एषोऽध्यवपूरकः, अत एव चास्य मिश्रजाताद्भेदः, यतो मिश्रजातं तदुच्यते यत्प्रथमत एव यावदर्थिकाद्यर्थमात्मार्थं च मिश्रं निष्पाद्यते, यत्पुनः प्रथमत आरभ्यते स्वार्थं पश्चात्प्रभूतान-

र्थिनः पाषण्डिनः साधून् वा समागतानवगम्य तेषामर्थायाधिकतरं जलतण्डुलादि प्रक्षिप्यते सोऽध्यवपूरक इति मिश्रजातादस्य भेदः। अमुमेव भेदं दर्शयति—

तंडुलजलआयाणे पुप्फफले सागवेसणे लोणे। परिमाणे नाणत्तं अज्झोयरमीसजाए य ॥ ३८९ ॥

व्याख्या—इह 'व्यत्ययोऽप्यासा'मिति वचनात्सप्तमी यथायोगं षष्ठ्यर्थे तृतीयार्थे च वेदितव्या, ततोऽयमर्थः—अध्यवपूरकस्य मिश्रजातस्य च परस्परं नानात्वं तण्डुलजलपुष्पफलशाकवेसनलवणानाम् 'आदाने' आदानकाले यत् विचित्रं परिमाणं तेन द्रष्टव्यं, तथाहि मिश्रजाते प्रथमत एव स्थाल्यां प्रभूतं जलमारोप्यते, अधिकतराश्च तण्डुलाः कण्डनादिभिरुपक्रम्यन्ते, फलादिकमपि च प्रथमत एव प्रभूततरं संरभ्यते, अध्यवपूरके तु प्रथमतः स्वार्थं स्तोकतरं तण्डुलादि गृह्यते, पश्चाद्यावदर्थिकादिनिमित्तमधिकतरं तण्डुलादि प्रक्षिप्यते, तस्मात्तण्डुलादीनामादानकाले यद्विचित्रं परिमाणं तेन मिश्राध्यवपूरकयोर्नानात्वमवसेयं। सम्प्रत्यध्यवपूरकस्य कल्प्याकल्प्यविधिमाह—

जावंतिए विसोही सघरपासंडि मीसए पूई। छिन्ने विसोही दिन्नंमि कप्पइ न कप्पई सेसं ॥ ३९० ॥

व्याख्या—'यावदर्थिके' यावदर्थिकमिश्रेऽध्यवपूरके शुद्धभक्तमध्यपतिते यदि तावन्मात्रमपनीयते ततो विशोधिर्भवति, अत एव च स्वगृहयावदर्थिकामिश्रोऽध्यवपूरको विशोधिकोटिर्विवक्ष्यते, स्वगृहपाषण्डिमिश्रे उपलक्षणमेतत् स्वगृहसाधुमिश्रे च शुद्धभक्तमध्यपतिते पूतिर्भवति, सकलमपि तद्भक्तं पूतिदोषदुष्टं भवतीत्यर्थः, तथा विशोधिकोटिरूपे यावदर्थिकाध्यवपूरके छिन्ने यावन्तः कणाः कार्पटिकाद्यर्थं पश्चात्क्षिप्ताः तावन्मात्रे स्थाल्याः पृथक्कृते सति यद्वा तावन्मात्रे कार्पटिकादिभ्यो दत्ते सति शेषमुद्धरितं यद्भक्तं तत्साधूनां कल्पते, शेषं पुनः

स्वगृहपाषण्डिमिश्रस्वगृहसाधुमिश्राध्यवपूरकरूपं न कल्पते, किमुक्तं भवति ?-यदि तत्तावन्मात्रं स्थाल्याः पृथक्कृतं दत्तं वा पाषण्ड्यादि-
भ्यस्तथापि यच्छेषं तन्न कल्पते इति। 'जावंतिए विसोही' इत्यवयवं विशेषतो व्याख्यानयति—

जावंतिए विसोही ... आहावणाए दिन्नं च तत्तियं कप्पए सेसं ॥ ३९१ ॥

छिन्नंमि तओ उक्कड्डियंमि कप्पइ पिहीकए सेसं । आहावणाए दिन्नं च तत्तियं कप्पए सेसं ॥ ३९१ ॥

व्याख्या—विशोधिकोटिरूपे यावदर्थिकेऽध्यवपूरके यावदधिकं पश्चात् प्रक्षिप्तं तावन्मात्रे 'छिन्ने' पृथक्कृते तत्र छेदो रेखयापि भवति तदाह—'तओ उक्कड्डियंमि' ततः स्वस्थानादुत्कर्षिते—उत्पाटिते, इहोत्कर्षितं स्वस्थानादुत्पाट्य शेषभक्तस्योपरि निक्षिप्तमपि भण्यते ततो विशेषणान्तरमाह–पृथक्कृते स्थाल्या वहिर्निष्काशिते शेषं यद्भक्तं तत्साधूनां कल्पते। अथवा 'आभावनया' उद्देशेन न तु सिक्थादिपरिगणनेन यदि तावन्मात्रं कार्पटिकादिभ्यो दत्तं स्यात् ततः शेषं कल्पते। तदेवमभिहितमध्यवपूरकद्वारं, तदभिधानाच्चाभिहिताः षोडशाप्युद्गमदोषाः। सम्प्रत्येतेषामेव विभागमाह—

एसो सोलसभेओ, दुहा कीरइ उग्गमो। एगो विसोहिकोडी, अविसोही उ चावरा ॥ ३९२ ॥

व्याख्या—एष षोडशभेद उद्गमः सामान्येन द्विधा, तद्यथा—'एको विशोधिकोटिः' एको भेदो विशोधिकोटिरूपः अपरा च 'अविशोधिः' 'अविशोधिकोटिः' अविशोधिकोटिरूपो द्वितीयो भेद इत्यर्थः। तत्र यद्दोषस्पृष्टभक्ते तावन्मात्रेऽपनीते सति शेषं कल्पते स दोषो विशोधिकोटिः, शेषस्त्वविशोधिकोटिः। तत्र प्रथमतोऽविशोधिकोटिमाह—

आहाकम्मुद्देसिय चरमतिगं पूइ मीसजाए य। बायरपाहुडियावि य अज्झोयरए य चरिमदुगं ॥ ३९३ ॥

व्याख्या—आधाकर्म सप्रभेदम्, १ 'औद्देशिकस्य' विभागौद्देशिकस्यान्त्यभेदत्रयं २ तथा 'पूतिः' भक्तपानरूपा ३ 'मिश्रजातं' पापण्डिगृहमिश्रसाधुगृहमिश्ररूपं ४ बादरा प्राभृतिका ५ अध्यवपूरकस्य च 'चरमद्विकं' स्वगृहपाषाण्डिमिश्रस्वगृहसाधुमिश्ररूपम् ६, एते उद्गमदोषा अविशोधिकोटिः । अनया चाविशोधिकोट्या अवयवेन स्पृष्टं शुद्धं भक्तं यद्दोषदुष्टं भवति तं दोषमाह—

उग्गमकोडी अवयव लेवालेवे य अकयए कप्पे । कंजियआयामगचाउलोयसंसट्ठपूईओ ॥ ३९४ ॥

व्याख्या—'उद्गमकोट्याः' उद्गमदोषरूपाया अविशोधिकोट्या 'अवयवेन' शुष्कसिक्थादिना तथा 'लेपेन' तक्रादिना 'अलेपेन' वल्लचणकादिना संस्पृष्टं यद्भक्तं तस्मिन्नुज्झितेऽपि यत् अकृते कल्पे—अकृतकल्पत्रये इत्यर्थः पात्रे यत्पश्चात्परिगृह्यते तत्पूतिरवगन्तव्यम् । इह कश्चिन्मतिदौर्बल्यादित्थं विकल्पेत—यथा यदेव साधूनाधाय निर्वर्त्तितं तदेवैकमोदनमाधाकर्म भवति, न शेषमवश्रावणकाञ्जिकादि, ततस्तत्संस्पृष्टं पूतिर्न भवतीति ततस्तदभिप्रायनिराकरणार्थमाह—'कंजि' इत्यादि, इह साध्वर्थमोदनेऽभिनिर्वर्त्यमाने यत्तत्सत्कं काञ्जिकादि तदप्याधाकर्मैव, तदवयवरूपत्वात्, ततः काञ्जिकेनाऽऽयामेन—अवश्रावणेन चाउलोदकेन च यत्संस्पृष्टं तदपि पूतिर्भवति । एतदेव रूपकत्रयेण भाष्यकृद्व्याख्यानयति—

सुक्केणऽवि जं छिक्कं तु असुइणा धोवए जहा लोए । इह सुक्केणऽवि छिक्कं धोवइ कंमेण भाणं तु ? ॥ (भा० ३७)

लेवालेवत्ति जं वुत्तं, जंपि दव्वमलेवडं । तंपि घेत्तुं ण कप्पंति, तक्काइ किसु लेवडं ? ॥ ( भा० ३८ )

आहाय जं कीरइ तं तु कम्मं, वज्जेहिही ओयणमेगमेव ।
सोवीर आयामग चाउलो वा, कम्मंति तो तग्गहणं करेंति ॥ ( भा० ३९ )

व्याख्या—सुगमं नवरमाद्यरूपकेण 'अवयव' इति पदं व्याख्यातं, द्वितीयरूपकेण 'लेवालेव' इति, तत्रायं भावार्थः—वल्लचनकादिद्रव्यमलेपकृत् यदि प्रथममनाभोगादिकारणतः पात्रे गृहीत्वा पश्चात्कथमपि परिज्ञाते परित्यज्य पात्रं कल्पयन्ति–कल्पत्रयेण प्रक्षालयन्ति, किं पुनस्तक्रादिकं लेपकृद्गृहीत्वा, तत्र सुतरां कल्पत्रयेण प्रक्षालनं कर्त्तव्यम् इति परिज्ञापनार्थं लेपालेप इत्युक्तं, तथा यदेव मुख्यवृत्त्या साधूनाधाय क्रियते तदेवाधाकर्म नान्यदिति बुद्धया शिष्या वर्जयिष्यन्ति ओदनमेवैकं केवलं न शेषं तण्डुलोदकादिकं ततो गुरवो—भद्रबाहुस्वामिनः सौवीरावश्रावणतण्डुलोदकान्यप्याधाकर्मेति परिज्ञापनार्थं तद्ग्रहणं–सौवीरादिग्रहणं विशेपतः कुर्वन्ति । तदेवमविशोधिकोटिरुक्ता, सम्प्रति विशोधिकोटिमाह—

सेसा विसोहिकोडी भत्तं पाणं विगिंच जहसत्तिं । अणलक्खिय मीसदवे सव्वविवेगेऽवयत्र सुद्धो ॥ ३९५ ॥

व्याख्या—शेपौघौद्देशिकं नवविधमपि च विभागौद्देशिकम्–उपकरणपूतिर्मिश्रस्याद्यो भेदः स्थापना सूक्ष्मप्राभृतिका प्रादुष्करणं क्रीतं प्रामित्यकं परिवर्त्तितमभ्याहृतमुद्भिन्नं मालापहृतमाच्छेद्यमनिसृष्टमध्यवपूरकस्याद्यो भेदश्चेत्येवंरूपा विशोधिकोटिः, विशुध्यति शेषं शुद्धं भक्तं यस्मिन्नुद्धृते यद्वा विशुद्ध्यति पात्रमकृतकल्पत्रयमपि यस्मिन्नुज्झिते सा विशोधिः, सा चासौ कोटिश्च—भेदश्च विशोधिकोटिः, उक्तं च—"उद्देसियंमि नवगं उवगरणे जं च पूइयं होई । जावंतियमीसगयं च अज्झोयरए य पढमपयं ॥ १ ॥ परियट्टिए

अभिहडे उब्भिन्ने मालोहडे इय । अच्छिज्जे अणिसिट्ठे पाओयर कीय पामिच्चे ॥ २ ॥ सुहुमा पाहुडियावि य ठवियगपिंडो य जो भवे दुविहो । सव्वोवि एस रासी विसोहिकोडी मुणेयव्वो ॥३॥" अत्र विधिमाह—'विगिंच जहसत्तिं' अनया विशोधिकोट्या यत् संसृष्टं भक्तं पानं वा तद्यथाशक्ति 'विगिञ्च' परित्यज, इयमत्र भावना—भिक्षामटता पूर्वं पात्रे शुद्धं भक्तं गृहीतं, ततस्तत्रैवानाभोगादिकारणवशतो विशोधिकोटिदोषदुष्टं गृहीतं, पश्चाच्च कथमपि ज्ञातं—यथैतद्विवक्षितं विशोधिकोटिदोषदुष्टं मया गृहीतमिति, ततो यदि तेन विनापि निर्वहति तर्हि सकलमपि तद्विधिना परिष्ठापयति, अथ न निर्वहति तदा यदेव विशोधिकोटिदोषदुष्टं तदेव तावन्मात्रं सम्यक् परिज्ञाय परित्यजति, यदि पुनरलक्षितेन सदृशवर्णगन्धादितया पृथक् परिज्ञातुमशक्येन मिश्रितं भवति यद्वा 'द्रवेण' तक्रादिना तदा सर्वस्यापि तस्य विवेकः, कृते च सर्वात्मना विवेके यद्यपि केचित्सूक्ष्मा अवयवा लगिता भवन्ति तथापि तत्र पात्रेऽकृतकल्पेऽप्यन्यतः परिगृह्णन् शुद्धो यतिः, त्यक्तभक्तादेर्विशोधिकोटित्वाद्, विवेकश्चतुर्द्धा भवति, तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तथा चाह—

दव्वाइओ विवेगो दव्वे जं दव्व जं जहिं खेत्ते । काले अकालहीणं असढो जं पस्सई भावे ॥ ३९६ ॥

व्याख्या—'द्रव्यादिकः' द्रव्यक्षेत्रकालभावविषयो विवेकः, तत्र यद्द्रव्यं परित्यजति स द्रव्यविवेकः, तथा परित्याज्यं यत्र क्षेत्रे परित्यज्यते स क्षेत्रविवेकः, क्षेत्रे विवेकः क्षेत्रविवेक इति व्युत्पत्तेः, तथा यद्विशोधिकोटिदोषदुष्टमकालहीनं—शीघ्रं परित्यज्यते एष कालतो विवेकः, इह यदैव दोषदुष्टं भक्तादिपरिज्ञातं तदैव तत्कालविलम्बाभावेन परित्यक्तव्यं, परित्यागबुद्ध्या वा पृथग्—भिन्ने स्थाने कर्त्तव्यमन्यथा. भावतस्तत्परिग्रहात्संयमहानिप्रसक्तेः, तत उक्तमकालहीनमिति, तथा यत् 'अशठः' अरक्तद्विष्टः सन् दोषदुष्टं पश्यति दृष्ट्वा

धिकोटिदोपवत् पतितमित्येवंरूपे 'द्रवं' काञ्जिकादि तत्र मध्ये प्रभूतं प्रक्षिप्य पश्चात्पात्रमवनम्य पात्रकर्णैकदेशे च शुद्धभक्तपानरक्षणार्थं करं च दत्त्वा सर्वं द्रवं गालयन्ति। तथा तृतीये शुद्धे आर्द्रे तीमनादौ मध्यपतितं शुष्कं कूरवल्लचनकादिरूपमोदनमित्येवंरूपे तत्र तीमनादौ मध्ये 'करं' हस्तं प्रक्षिप्यौदनादि यद्यावन्मात्रं शक्नोति तावन्मात्रमशठः सन् 'उल्लिंचति' आकर्पति, ततः शेषं तीमनादि कल्पते, तथा 'चरमे' आर्द्रे आर्द्रे पतितमित्येवंरूपे यदि तद्द्रव्यं 'दुर्लभम्' अन्यत्र न प्राप्यते तत्रोद्देशतस्तावन्मात्रं परित्यजन्ति, शेषं कल्पते, एपा चतुर्भङ्गिका साधूनामसंस्तरणे वेदितव्या, संस्तरणे च सकलमपि परित्यजन्ति। तथा चाह—

संथरे सव्वमुज्झंति, चउभंगो असंथरे। असढो सुज्झई जेसुं, मायावी जेसु बज्झई ॥ ४०० ॥

व्याख्या—'संस्तरे' निर्वाहे सति सर्वमपि पात्रस्थितं विशोधिकोटिसंसृष्टमुज्झन्ति, 'असंस्तरे' अनिर्वाहे पुनः 'चतुर्भङ्गी' चत्वारोऽनन्तरोक्ता भङ्गाः, सूत्रे च पुंस्त्वनिर्देश आर्पत्वात्, कथंभूतास्ते भङ्गाः? इत्याह—येषु भङ्गेषु 'अशठः' अरक्तद्विष्टः सन् वर्त्तमानः शुध्यति—शुद्धिमापद्यते, मायावी च येषु बध्यते। तदेवं विशोध्यविशोधिरूपं कोटिद्वयं समपञ्चमुक्तम्, इदानीं तदेवोपसंहार-व्याजेन सङ्क्षेपत आह—

कोडीकरणं दुविहं उग्गमकोडी विसोहिकोडी य। उग्गमकोडी छक्कं विसोहिकोडी अणेगविहा ॥ ४०१ ॥

व्याख्या—कोटीकरणं 'द्विविधं' द्विप्रकारं, द्विधा कोटिरित्यर्थः, तद्यथा—उद्गमकोटिर्विशोधिकोटिश्च, तत्रोद्गमकोटिः 'षट्कम्' आधाकर्मिकौद्देशिकान्त्यभेदत्रिकादिषड्भेदाः, विशोधिकोटिः पुनरनेकविधा—ओघौद्देशिकादिरूपा। सम्प्रत्यन्यथा कोटीः प्रतिपादयति—

नव चेव अढारसगं सत्तावीसा तहेव चउ पन्ना । नउइ दो चेव सया उ सत्तरी होइ कोडीणं ॥ ४०२ ॥

व्याख्या—प्रथमतः कोटयो नव भवन्ति, तद्यथा–स्वयं हननमन्येन घातनमपरेण हन्यमानस्यानुमोदनं, तथा स्वयं पचनमन्येन पाचनमपरेण पच्यमानस्यानुमोदनं, तथा स्वयं क्रयणमन्येन क्रायणमपरेण क्रीयमाणस्यानुमोदनम् , इहाद्याः षडविशोधिकोटयोऽन्तिमास्तु तिस्रो विशोधिकोटयः, एता अपि नवकोटीः कोऽपि रागेण सेवते कोऽपि द्वेषेण, ततो द्विकेन गुणिता अष्टादश भवन्ति, अथवैवं ताः-कोऽपि मिथ्यादृष्टिः कुशास्त्रसम्पर्कसमुत्थवासनावशतो निःशङ्कं सेवते, कोऽपि सम्यग्दृष्टिः सन् विरतोऽप्यनाभोगादिकारणतोऽपरिज्ञानतः, कोऽपि पुनः सम्यग्दृष्टिरपि सन्नविरतत्वेन गार्हस्थ्यमवलम्बमानः, ततो मिथ्यात्वाज्ञानाविरतिरूपेण त्रिकेण नव गुणिताः सप्तविंशतिर्भवति, रागद्वेषौ त्वत्र पृथग्न विवक्ष्येते, यदा तु पृथग् विवक्ष्येते तदा ताभ्यां सप्तविंशतिर्गुणिता चतुष्पञ्चाशद्भवति, तथा ता एव नव कोटयः कदाचित् पुष्टमालम्बनमधिकृत्य दशविधक्षान्त्यादिधर्मपरिपालनार्थं सेव्यन्ते, यथा दुर्भिक्षे कान्तारे चान्येन फलादिनाऽभ्यवहृतेनाहं देहं धृत्वा क्षान्तिं मार्दवमार्जवं यावद्ब्रह्म पालयिष्यामीति हन्ति, एवमन्येन घातनाद्यपि भावनीयं, ततो नव दशभिर्गुणिता जाता नवतिः, इयं च सामान्यतश्चारित्रनिमित्ता, काचित् पुनश्चारित्रनिमित्ता विशिष्टज्ञानलाभसम्भवानिमित्ता च, यथाऽस्मिन् कान्तारादावनेन फलादिनाऽभ्यवहृतेन देहमहं धृत्वा क्षान्त्यादिकं पालयिष्यामि प्रभूतानि च शास्त्राण्यध्येष्ये इति हन्तीत्यादि, एषा च ज्ञानस्य प्राधान्यविवक्षणात् ज्ञाननिमित्ता भण्यते, काचित्पुनश्चारित्रनिमित्ता दर्शनस्थिरीकरणहेतुशास्त्रार्थपरिज्ञाननिमित्ता च, यथाऽस्मिन् कान्तारादावनेन फलादिनाऽभ्यवहृतेन देहं परिपाल्य क्षान्त्यादिकं पालयिष्यामि दर्शनं च निर्मलं विधास्ये इति हन्तीत्यादि, एषा च दर्शनस्य प्राधान्यविवक्षणाद्दर्शननिमित्ताऽभिधीयते, तत एवं त्रिप्रकारा नवतिरिति त्रिभिर्नवतिर्गुण्यते, ततो द्वे शते सप्तत्यधिके कोटीनां भवतः , उक्तं च–" रागाई

मिच्छाई रागाई समणधम्मं नाणाई । नवं नवं सत्तावीसा नवं नउईएं उ गुणकारा ॥ १ ॥" या तु दर्शनस्थिरीकरणार्थं प्रभूतशेषशास्त्रावगाहनार्थं चारित्रार्थं च सेव्यते सा सामान्यतश्चारित्रनिमित्तायामन्तर्भाव्यते, ततो न सूत्रोक्तभेदसंख्यानियमव्याघातः । सम्प्रत्युद्गमद्वारदोषाणां वक्ष्यमाणोत्पादनाद्वारदोषाणां च यतः सम्भवस्तांस्तदुत्थितान् विविक्त्येनाह—

सोलस उग्गमदोसे गिहिणो उ समुट्ठिए वियाणाहि । उप्पायणाएँ दोसे साहूउ समुट्ठिए जाण ॥ ४०३ ॥

व्याख्या—एताननन्तरोक्तान् षोडशसङ्ख्यानुद्गमदोषान् गृहिणः सकाशादुत्थितान् विजानीहि, तथाहि–आधाकर्मादिदोषदुष्टं भक्तादि गृहस्थैरेव क्रियते, ये तूत्पादनाया दोषा वक्ष्यमाणास्तान् 'साधुतः' साधोः सकाशादुत्थितान् जानीहि, धात्रीत्वादीनां साधुभिरेव क्रियमाणत्वात् । तदेवमुक्तमुद्गमद्वारं, सम्प्रत्युत्पादनाद्वारं वक्तव्यं, तत्र प्रथमत उत्पादनामाह—

णामं ठवणादविए भावे उप्पायणा मुणेयव्वा । दव्वंमि होइ तिविहा भावंमि उ सोलसपया उ ॥ ४०४ ॥

व्याख्या—उत्पादना चतुर्द्धा, तद्यथा–'णामं'ति नामोत्पादना स्थापनोत्पादना 'द्रव्ये' द्रव्यस्योत्पादना 'भावे' भावस्योत्पादना च, तत्र नामस्थापने द्रव्यस्योत्पादना च यावन्नोआगमतो भव्यशरीरद्रव्योत्पादना प्रागुक्तगवेषणादिरिव भावनीया, ज्ञशरीरभव्यशरीरव्यतिरिक्ता तु द्रव्योत्पादना त्रिधा–सचित्तद्रव्योत्पादनाऽचित्तद्रव्योत्पादना मिश्रद्रव्योत्पादना च । भावोत्पादना द्विधा, तद्यथा–आगमतो नोआगमतश्च, तत्रागमत उत्पादनाशब्दार्थज्ञस्तत्र चोपयुक्तः, नोआगमतो भावोत्पादना तु द्विधा, तद्यथा–प्रशस्ताऽप्रशस्ता च, तत्र प्रशस्ता ज्ञानाद्युत्पादना, अप्रशस्ता 'षोडशपदा' वक्ष्यमाणधात्रीदूत्यादिषोडशभेदा । तत्र प्रथमतः सचित्तद्रव्योत्पादनां विभावयिषुराह—

